TRIVANDRUM SANSKRIT SERIES.

No. CXXXV.

Śrī Citrodayamañjarī

No. XXIV.

# THE SARVADARŚANAKAUMUDĪ

OF

Mādhavasarasvatī

EDITED BY

K. SĀMBAŚIVA ŚASTRĪ,

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.



TRIVANDRUM:

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS

1938.



अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १३५.

श्रीचित्रोदयमञ्जरी

ग्रन्थाङ्कः २४.

माधवसरस्वतीविरचिता

# सर्वदर्शनकौमुदी

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधिता ।

सा च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशिता ।

कोलम्बाब्दाः ११३३. क्रैस्ताब्दाः १९३८.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE.

The present work, Sarvadarśanakaumudī, develops the heory that the *ne-plus-ultra* of all the systems of philosophy extending up to Uttaramīmāmsa points to the realisation of the supreme soul, recognising as it does the principles of the three-fold Vedic systems, Vaiśeṣikanyāya, Mīmāmsa and Sāṅkyha on the one hand and discarding those of Cārvākas Ārhatas, and Buddhists on the other. Apart from the exposition of the five or six systems, the principles of other schools of thought are also dwelt upon herein *en passant*.

The couplet

तस्माद्विद्यास्तमयो मोक्षस्स च परात्मता ।
जीवतोऽजीवतो वापि भवेच्छ्रुत्यादिमानतः ॥

(Page 144.)

justifies the inference that the author *tout-a fait* depends on the Vedas, Smṛties and Purāṇas in quest of sure authorities lending support to his views. The closing sentence

"तदेवं श्रुतिस्मृतिपुराणादिष्वाघुष्यमाणा जीवन्मुक्तिरपलपितुं न शक्यते ।"
(Page 144)

brings home the conception that almost all Darśanas strive after self-cognition on the strength of the truism,

"नहि सर्वकामविमोकः परमात्मसाक्षात्करणमन्तरेणोपपद्यते ।"
(Page 144)

Thus follows the general that inscrutable is the mental disposition during the final liberation from the present state of life maxim,

Sāyaṇamādhavācārya, in his endeavour to expound the fifteen schools of thought commencing from those of Cārvākas and ending with those of Śaṅkara, refutes in the early pages of his work Sarvadarśanakaumudī, the atheistic schools only to affirm the Advaita doctrines as irrevocably as he could.

Again the story goes that the celebrated author announced his doctrines from the exalted position of the universal preceptorship, before he threw off his mortal coil.

The following lines occurring in Kaumudī,

"शङ्करभगवत्पादाः सर्वान् मुमुक्षूननुगृह्णन्तः शारीरकस्य केवलाद्वैतपरत्वं निर्णेतुकामा भाष्यं प्रणिन्युः । तच्च नवसहस्रम् । तत्तात्पर्यं विवरीतुकामा भाष्यकारस्य शिष्याः पद्मपादाचार्यास्तस्य भाष्यस्य टीकां कृतवन्तः । सा च केनचिद्दुष्टेन नाशिता सर्वा ।"
(Page 113)

bear out his aversion towards the disciples of Śrī Śaṅkara, despite his devotion and veneration for the universal preceptor.

His derisive disposition is made more explicit in referring to them as: —

'एतच्च शङ्कराचार्यशिष्यसुरेश्वराचार्यनिर्मितम् ॥'

Many are the tastes and methods of exposition of Śāstras. This treatise serves a good turn to the seekers of knowledge whose finale is invariably identical. The title Sarvadarśanakaumudī is indicated by the following words of the author himself :—

"पदवाक्यप्रमाणज्ञो माधवाख्यसरस्वती ।
कुरुते बालबोधाय सर्वदर्शनकौमुदीम् ॥"

(Page 1.)

He does not fail to give a glimpse into his personal history *inter alia.* The subjoined verses credit the ascetic Mādhavasarasvatī, a native of Sodāsī, on the valley of the Sahya mountains wherein is situated the temple of Gokarṇamahābali, with this composition.

"गोराष्ट्रदेशोऽखिलराष्ट्रवर्यः
सदाकरो दक्षिणदेशनिष्ठः ।
विराजते सह्यगिरीन्द्रसानौ
यत्रास्ति गोकर्णमहाबलेशः ॥

तद्देशजन्मा यतिरेकदण्डी
सरस्वतीमस्तकमाधवाख्यः ।
विगाह्य नद्यां दिशि दक्षिणस्यां
सोदाख्यपुर्यामकरोत् कृतिं सः ॥

अनात्मशास्त्रप्रतिपादनेन
दोषो यदि स्यान्मम नास्ति दोषः ।
वेदान्तशास्त्रेण निराकरिष्णोः
सर्वस्य भेदस्य पुरोदितस्य ॥

प्रस्थानभेदत्रयभिन्नमेकं
वेदान्तशास्त्रं परिलोड्य सारम् ।
सङ्गृह्य वक्ष्यामि हिताय मोक्ष-
काङ्क्षावतामात्ममतेश्च शुद्ध्यै ॥"

(Page 112.)

Just as Murāri was the third among the poets, the author's novel method of elucidation forms the fourth innovation in the Vedāntic system. The remark :—

"एवं वार्त्तिकविवरणवाचस्पतिसंज्ञकं प्रस्थानत्रयमि"ति ।

(Page 114)

leads to the inference that this new departure from the common run of commentaries is decidedly the fourth in its kind thus disclosing again that the present treatise is different from that of Sāyaṇamādhava. The following lines point out that Gokarṅa forms the western boundary of Sodāsī :—

"गोराष्ट्रदेशमध्ये गोकर्णात्पूर्वतोऽपूर्वा ।
अरसेन्द्रभूप(री ?)वसतिस्सोदानगरी समस्ति सत्पुरुषा ॥
तत्रास्ते यतिवर्यो माधवसंज्ञः सरस्वतीपूर्वः ।
ग्रन्थमिमं विरचितवान् यत्र सुबोधानि दर्शनानि स्युः ॥

| | |
|---|---|
| मयूखमाला—चिन्तामणिटीका | १ |
| मितभाषिणी नाम सप्तपदार्थी टीका | २ |
| मन्दानुकम्पिनी नाम कुसुमाञ्जलिटीका | ३ |
| वासिष्ठपञ्चिका नाम वासिष्ठव्याख्या | ४ |
| अभिनवसप्तपदार्थी | ५ |
| सर्वदर्शनकौमुदी | ६ |

Another stanza :—

"आभिस्तु षड्भि कृतिभि-
रीश्वरः प्रीयतां सदा ।
अरसेन्द्रमहीपाल-
पालिते सोमदापुरे ।
स्थितो माधवकर्मन्दी
व्यधाच्छास्त्राणि तत्परः ॥"

इति ।

(Page 145.)

attributes five other works to this author. Somadā the name of his native place may be the refined form of the word Sodā.

No confirmatory evidence is available to determine the date of Śrīmādhavasarasvatīyati. However, the following information procured on minute scrutiny is noteworthy.

Mahāmahopādhyāya Abhyaṅker Vāsudeva Śāstrī had fixed the date of Madhava Sarasvatiyati, to whom the commentary Saptapadārṭhatīkā is ascribed, as 1350 A. D. in the introduction to his edition of Sarvadarśaṅasaṅgraha (vide page 575) wherein other concurrent references also are noticeable. I think, the date is attributable only to Sāyaṇamādhava. Further research on the determination of time can be had later. In fine, Sāyaṇa of the 14th century was a contemporary of those alluded to herein. It is indeed significant that many an expounder had flourished simultaneously.

The original Ms. used for this publication belongs to Kūḍallūr Brahmadattan Nambūri and is 200 years old. Expressing my deep debt of gratitude to the owner of the manuscript, I present the work to the enlightened public.

Trivandrum, 26-9-1113.

K. SĀMBAŚIVA ŚĀSTRĪ,
*Curator.*

॥ श्रीः ॥

# निवेदना ।

इयं सर्वदर्शनकौमुदी वैदिकानि त्रीणि वैशेषिकन्याय-मीमांसा-साङ्ख्यानि साधकानि ग्राह्यतया, वैदिकेतराणि चार्वाकार्हतबौद्धानि बाधकानि त्याज्यतया च प्रदर्श्यन्ति उत्तरमीमांसापर्यन्तं वेदान्तदर्शनमुपायतया निरूप्य ब्रह्मविज्ञानं परममुपेयं मधुरोदारगभीरया सरण्या प्रकाशयति । प्रातिस्विकतयैवं पञ्चषाणां दर्शनानामेव प्रकाशने कृतपदापि काममुपोद्बलकानि मतान्तराणि च तत्र तत्रेयं कौमुदी विशदयत्येव ।

तस्मादविद्यास्तमयो मोक्षस्स च परात्मता ।
जीवतोऽजीवतो वापि भवेच्छ्रुत्यादिमानतः ॥

(Page 144)

इति मनसि निहितं प्रतिपाद्यसारं सङ्गृह्णतोऽस्य ग्रन्थकर्तुः परमार्थतयावलम्बभूतानि प्रमाणानि श्रुतिस्मृतिपुराणादीनीति स्पष्टं प्रतीयते ।

"नहि सर्वकामविमोकः परमात्मसाक्षात्करणमन्तरेणोपपद्यते"

इत्युपपादनमुपसंहरन्

"तदेवं श्रुतिस्मृतिपुराणादिष्वाघुष्यमाणा जीवन्मुक्तिरपलपितुं न शक्यते" इति परमान्तिमेन वाक्येन दर्शनैरेभिरपरोक्षतयात्मदर्शनमेव सिद्धान्त्यत इति स्फुरति, न तु विदेहमुक्तिः, अवृत्तेरवचनीयोपलम्भाच्च ।

सर्वदर्शनसङ्ग्रहो नाम श्रीमत्सायणमाधवाचार्यप्रणीतस्तु चार्वाकादीनि शाङ्करान्तानि पञ्चदश दर्शनानि सङ्गृह्णानो, वैदिकानि प्रथमतः खण्डनीयान्युपन्यस्य परममद्वैतसिद्धान्तमन्ततः साधयतीत्यन्योऽन्यादृशश्च । तत्कर्तारश्चाचार्या अन्ते श्रीमज्जगद्गुरुपीठमधिष्ठिताः परमं स्वकीयं सिद्धान्तमुदाहरन्त एव सिद्धा इति ह स्म पुरा शृणुमः । अत्र च कौमुद्यां —

"शङ्करभगवत्पादाः सर्वान्मुमुक्षूननुगृह्णन्तः शारीरकस्य केवलाद्वैतपरत्वं निर्णेतुकामा भाष्यं प्राणैषुः । तच्च नवसहस्रम् । तत्तात्पर्यं विवरीतुकामा भाष्यकारस्य शिष्याः पद्मपादाचार्यास्तस्य भाष्यस्य टीकां कृतवन्तः । सा च

नाशिता सर्वा" (पृ० ११३)इत्यादिभिः पङ्क्तिभिरपरेऽपि भग-
गादरभेरे तदनुगामिष्वस्वारस्यमरुचिश्च बाढं ध्वनिते ।
। शङ्कराचार्यशिष्यसुरेश्वराचार्यनिर्मितम् (पृ० ११३)इत्यादिनि-
ध्वन्यते । अस्तु नाम रुचिभेदः पथिभेदश्च । सर्वथा पार्यन्तिकं
यथाकथञ्चित्प्रसाधनमिदं मन्ये साधनं दर्शनकाङ्क्षिणाम् ।
भेधानं "सर्वदर्शनकौमुदी"त्यधः प्रदश्यमाना प्रतिज्ञाकारिका

"पदवाक्यप्रमाणज्ञो माधवाख्यसरस्वती ।
कुरुते बालबोधाय सर्वदर्शनकौमुदीम् ॥"

(Page 1).

भेधानमत एवावगतं "श्रीमाधवसरस्वती"ति ।
ये च कश्चिदेवं ग्रन्थकारः स्वचरितं लिखति —

"गोराष्ट्रदेशोऽखिलराष्ट्रवर्यः
सदाकरो दक्षिणदेशनिष्ठः ।
विराजते सह्यगिरीन्द्रसानौ
यत्रास्ति गोकर्णमहाबलेशः ॥
तद्देशजन्मा यतिरेकदण्डी
सरस्वतीमस्तकमाधवाख्यः ।
विगाह्य नद्यां दिशि दक्षिणस्यां
सोदास्यपुर्यामकरोत् कृतिं सः ॥
अनात्मशास्त्रप्रतिपादनेन
दोषो यदि स्यान्मम नास्ति दोषः ।
वेदान्तशास्त्रेण निराकरिष्णोः
सर्वस्य भेदस्य पुरोदितस्य ॥
प्रस्थानभेदत्रयभिन्नमेकं
वेदान्तशास्त्रं परिलोड्य सारम् ।
सङ्गृह्य वक्ष्यामि हिताय मोक्ष-
काङ्क्षावतामात्समतेश्च शुद्ध्यै ॥"

(Page 112)

एभिः पद्यैः सह्याद्रिसानुपरिसरवर्तिनि सोदासदेशे गोकर्णमहाबल-क्षेत्राधिष्ठिते श्रीमाधवसरस्वतीयतिरस्य कर्तेति विशदं प्रतीयते। किञ्च तृतीय इव मुरारेः कविषु, तुरीयमस्य प्रस्थानं वेदान्तेषु गमितम्। 'प्रस्थानभेदत्रय-भिन्नमि'त्यत्र भेदप्रतियोगि च प्रस्थानभेदत्रयम्।

"एवं वार्त्तिकविवरणवाचस्पतिसंज्ञकं प्रस्थानत्रयम्" (पृ० ११४) इति कथनात्तदपेक्षं प्रतिनवमस्य प्रस्थानं चतुर्थमिति ज्ञायते।

तदितोऽपि श्रीमत्सायणमाधवादिप्रस्थानादन्यत्वमस्य सिद्धम्। ग्रन्थान्ते च—

"गोराष्ट्रदेशमध्ये गोकर्णात्पूर्वतोऽपूर्वा।
अरसेन्द्रभूप(री?)वसतिस्सोदानगरी समस्ति सत्पुरुषा॥

तत्रास्ते यतिवर्यो माधवसंज्ञः सरस्वतीपूर्वः।
ग्रन्थमिमं विरचितवान् यत्र सुबोधानि दर्शनानि स्युः॥"

इति कीर्तनाद् गोकर्णदेशोऽस्य पश्चिमावधिः देशपतेर्नगर्या नामधेये च कथितानि।

अपि च —

"मयूखमाला चिन्तामणिटीका — १.
मितभाषिणी नाम सप्तपदार्थी टीका — २.
मन्दानुकम्पिनी नाम कुसुमाञ्जलिपद्यटीका — ३.
वासिष्ठपञ्चिका नाम वासिष्ठव्याख्या — ४.
अभिनवसप्तपदार्थी — ५.
सर्वदर्शनकौमुदी — ६.

आभिस्तु षड्भिः कृतिभिरीश्वरः प्रीयतां सदा।
अरसेन्द्रमहीपालपालिते सोमदापुरे।
स्थितो माधवकर्मन्दी व्यधाच्छास्त्राणि तत्परः॥"

(Page 145).

इति दर्शनादेतद्ग्रन्थकर्तुरन्याश्च पञ्च-कृतयो नामग्राहं ग्राह्या भवन्ति। पुरी च सोदेति भाषायाः सोमदेति संस्कृतीकृता च प्रतिभाति।

श्रीमाधवसरस्वतीयतेरस्य जीवितसमयनिर्द्धारणां प्रति न कोऽप्युपष्टम्भशङ्कुः शक्यदर्शनः । अथापि काशकुशावलम्बिनीं गतिमाश्रयता मया यथादृष्टमनपलप्य कथ्यते । महामहोपाध्याय-अभ्यङ्करोपाह्वयवासुदेवशास्त्रिमहाशयैः अभिनवप्रसाधिते सर्वदर्शनसङ्ग्रहे प्रतिदर्शनं प्रवृत्तानां ग्रन्थकाराणां सूच्याम् ५२५ तमे पृष्ठेऽमी माधवसरस्वतीयतयः, मितभाषिण्याः सप्तपदार्थीटीकायाः कर्तृत्वेन प्रवेश्य क्रिस्त्वब्दीय (१३५०) चतुर्दशशतकजीविनो रेखिताः । अनुवदति च कृतेर्मितभाषिण्या ग्रहणमन्त्रोद्धृतास्वन्यतामायाः इति मन्ये, समयनिर्णयोऽयमिमान् प्रत्येव लगति । तथा निर्णयस्य सामग्रीं प्रति चर्चा तु समयान्तरे सम्पाद्या । सद्य एतावता चतुर्दशशतकजीविनां सायणाचार्याणामिमे समसमयजीविन इत्यहो जितं शास्त्रीयप्रस्थानोदयैरनेकेषामनेकतो युगपदेव ।

एतत्प्रसाधनाधारभूता मातृका "कूटल्लूर् ब्रह्मदत्तन् नम्पूरिप्पाड्डु स्वामिका मार्की द्विशतवर्षपर्युषिता । अस्याश्च प्रसाधनाय तामिमामद्वितीयां मातृकां प्रदायोपकृतवद्भ्यस्तेभ्यो महतीं कृतज्ञतामनुस्मरन्नस्मि सद्यः कौमुदीमखिलाह्लादनायावतारयामि धन्यः ॥

अनन्तशयनम्,
१४–९–१११३.

के. साम्बशिवशास्त्री.

# विषयानुक्रमणिका ।

| विषयः. | पृष्ठम्. |
|---|---|

विषयः. पृष्ठम्.

॥ श्रीः ॥

# सर्वदर्शनकौमुदी

## माधवसरस्वतीकृता ।

---

यत्पादपङ्केरुहरेणुपुञ्जसंरञ्जिताङ्गा अपि पामराद्याः ।
त्रिलोकवन्द्या भुवि भान्ति सद्यो जयन्ति कर्णाटयतीश्वरास्ते ॥

पुरा माधवभारत्या बालबोधाय निर्मिताम् ।
यथाशक्ति लिखाम्येनां सर्वदर्शनकौमुदीम् (?) ॥

वेदान्तविज्ञानसुनिश्चितार्थै-
योंगीश्वरैर्ध्येयमजं विशुद्धम् ।
उमानुमाभ्यामधिगम्यमानं
वन्दे महेशं सदनुग्रहाशम् ॥

विद्येन्द्रवननामानं श्रीगुरुं प्रणमाम्यहम् ।
विनेयभृङ्गसंलीढपादपङ्केरुहासवम् ॥

पदवाक्यप्रमाणज्ञो माधवाख्यसरस्वती ।
कुरुते बालबोधाय सर्वदर्शनकौमुदीम् ॥

ननु किमिदं ग्रन्थाद्यभिमतकार्यारम्भे आदौ नमस्काराादि क्रियते । मङ्गलार्थमिति चेत्, किं तस्य फलं, किं वा तस्य कर्तव्यतायां प्रमाणम् । न तावदारब्धकर्मसमाप्तिः फलम् । समाप्तेः कालान्तरभाविन्याः क्षणविनाशि-नमस्कारादिकर्मसाध्यत्वायोगात् । कथं तर्हि दर्शादेः स्वर्गसाधनत्वमिति चेत्, तत्र साधनत्वान्यथानुपपत्त्या कालान्तरभाविस्वर्गसाधक(त्त्वा ? त्वेना)वान्तरापूर्वपरमापूर्वयोः कर्मजन्ययोर्व्यापारयोर्द्वारत्वेनाभ्युपगमात्, यथानुभवस्य क्षणिकत्वेऽपि संस्कारो द्वारं कालान्तरभाविस्मृतिजनने । तर्हि मङ्गलेऽपि प्रतिबन्धकध्वंसो व्यापारः साधनत्वान्यथानुपपत्त्या द्वारत्वेन

G. P. T. 19. 500. 29-9-111. 

कल्प्यत इति चेद्, विघ्नात्यन्ताभावस्थले द्वाराभावेन मङ्गलस्य कारणता न स्यात् । द्वारसन्देहेन नियमान्मङ्गले प्रवृत्त्यनुपपत्तेश्च । प्रमाणमपि न तावत् प्रत्यक्षम् । अकृतेऽपि मङ्गले प्रमत्तानुष्ठितकर्मसमाप्तेः । कृतेऽपि मङ्गले किरणावल्यादौ चासमाप्तेः । अतो व्यभिचारेण कारणत्वस्य प्रत्यक्षेण ग्रहीतुमशक्यत्वात् कारणताग्राहकत्वमन्तरेण प्रत्यक्षेण न तत्कर्तव्यता बोधयितुं शक्यते । नाप्यनुमानम् । मङ्गलं कर्तव्यम्, विशिष्टशिष्टाचारविषयत्वात्, दर्शवत् इति हि तत् । तत्र फलवत्त्वमुपाधिः । दर्शे श्रुत्या फलवत्त्वनिश्चयात् । अकृते तु मङ्गलस्य कारणत्वग्राहकाभावेन समाप्तेरफलत्वात् फलान्तराभावात् । नाप्यागमः । मङ्गलं कर्तव्यं, नमस्कारादि कर्तव्यम् इत्येवंविधागमाश्रवणात् । नापि शिष्टाचारेण तादृगागमोऽनुमेयः । व्यभिचारेण फलस्यैवाभावात् सहस्रेणाप्यागमेन तत्कर्तव्यता बोधयितुं न शक्यत इति । अत्रोच्यते । अभीष्टसमाप्तिकामानां शिष्टानां नमस्कारादिमङ्गलाचरणदर्शनेन तत्कर्तव्यताबोधकश्रुतिरनुमीयते । तथाच श्रुतिरेव मङ्गलकर्तव्यतायां प्रमाणम् । नच व्यभिचारः । श्रुत्या कर्तव्यत्वे बोधिते यत्र मङ्गले कृतेऽप्यसमाप्तिस्तत्र साधनवैकल्यमूहनीयम् । विघ्नबाहुल्यं वा । विघ्नध्वंसो हि द्वारम् । तत्र कतिपयविद्यमानविघ्नध्वंसेन कतिपयग्रन्थादिनिर्माणं जायते । आगामिविघ्नवशादसमाप्तिः । यत्र त्वकृतेऽपि समाप्तिः, तत्र समाप्त्या लिङ्गेन मङ्गलमनुमेयम् । यद्यैहिकं बाधितं, तर्हि जन्मान्तरीयं भविष्यति । श्रुत्या तु मङ्गलसामान्यस्यैव कारणता बोध्यते, न त्वैहिकादिविशेषस्य । यथा पुत्रेष्टिः 'पुत्रकामो यजेते'ति विधिबोधिता ऐहिकमामुष्मिकं वा पुत्रफलं प्रयच्छति, तथाभीष्टसमाप्तिकामो नमस्काराद्याचरेदिति विधिना बोधितं मङ्गलमपि समाप्तिमैहिकीमामुष्मिकीं वा जनयति । तथाचैहिकमङ्गलाभावे यत्र समाप्तिस्तत्र जन्मान्तरीयं कल्प्यम् । तथाच मङ्गलकर्तव्यतायां शिष्टाचारानुमिता श्रुतिरेव मानम् । श्रुत्यनुमानं त्वेवं — नमस्कारो वेदबोधितकर्तव्यताकः, अलौकिकाविगीतशिष्टाचारविषयत्वात्, दर्शाद्याचारवत् । यथा दर्शाद्याचारः शिष्टाचारविषयः, स च 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकाम' इति वेदबोधितश्च, तथा नमस्कारादिरपि अभीष्टसमाप्तिकामानां शिष्टानामाचारस्य विषयः, 'अभीष्टसमाप्तिकामो नमस्कारादिमङ्गलमाचरेद्' इत्येवंरूपार्थवेदबोधितश्च भवतीत्यनु-

मीयते । दर्शादौ वेदः प्रत्यक्षः, अयं त्वनुमेय इति विशेषः । एवं च श्रुतिः प्रमाणम् । अभीष्टसमाप्तिः फलम् । विघ्नध्वंसोऽवान्तरव्यापारः । नच विघ्नात्यन्ताभावस्थले द्वाराभावादफलं मङ्गलमिति वाच्यम् । दुरितराहित्यस्य क्वाप्यसम्भवात् । सर्वेषु सूक्ष्मापराधसम्भवात् तस्य नमस्कारादिनैव निरस्यत्वेन तद्ध्वंसद्वारसम्भवात् । विघ्नासम्भेव वा तत्र मङ्गलं जन्मान्तरीयफलजनकम् । अत एव क्वचिदैहिकमङ्गलाभावे समाप्तिर्जायते । अतोऽभीष्टसमाप्तिफलकं नमस्कारादि ग्रन्थादौ कर्तव्यमिति । चिन्तामणिकारस्तु — मङ्गलस्य विघ्नध्वंस एव फलम् । समाप्तिः स्वकारणपत्रमषीलेखनादिनैव भवति । यथा कारीर्या अवग्रहध्वंसे वृष्टिः स्वकारणादेव मेघादेर्भवति । विघ्नध्वंसकाम एवाधिकारी न समाप्तिकामः, समाप्तिं प्रति व्यभिचारस्योक्तत्वात् । न तत्र जन्मान्तरीयमनुमेयम् । मङ्गलस्य कारीरीवदैहिकफलत्वात् । यथा शुष्यत्सस्यसञ्जीवनकामः कारीरीं निर्वपेद् इति विधिना बोधितकारीर्या ऐहिकफलत्वं, तथा ऐहिकसमाप्तिकामानां शिष्टानामाचारेण तथाविधश्रुत्यनुमानात् । फलमप्यैहिकम् । तत्र व्यभिचार उक्त एव । अतः पुत्रेष्टिदृष्टान्तोऽत्र न क्रमते । किन्तु कारीरीदृष्टान्तः । स चैहिकफल एव । तद्वन्मङ्गलेऽपि विघ्नध्वंस एव फलम् । न तत्र व्यभिचारः, यावन्मङ्गलं तावद् विघ्नध्वंससम्भवात् । समाप्त्यभावस्तु आगामिविघ्नात् कारणाभावाद् वा । व्यतिरेकव्यभिचारस्तु नास्त्येव । अकृते मङ्गले विघ्नध्वंसस्याप्यभावात् । ननु विघ्नस्य दुरितरूपत्वेनातीन्द्रियत्वात् तन्निश्चयाभावे तद्ध्वंसकामनानिश्चयाभावात् कथमधिकारिविशेषानिश्चये पुरुषस्य मङ्गले प्रवृत्तिः, वैदिककर्मण्यधिकारिनिश्चयादेव प्रवृत्तिनियमादिति चेत् । सत्यम् । प्रत्यक्षविधौ हि श्रुतविशेषनिश्चयादेव प्रवृत्तिः, वैदिके कर्मणि निश्चिताधिकारिणामेव प्रवृत्तिदर्शनात् । अत्र त्वनुमिता श्रुतिः । सा च यथाचारदर्शनमनुमीयते । विघ्नसन्देहवतां शिष्टानामाचारो दृश्यते । तथाचान्यत्र कर्मणि निश्चिताधिकारेऽपि मङ्गलं सन्दिग्धाधिकारमेव । अनुमानस्याचारानुसारित्वादित्याह । वेदप्रामाण्याभ्युपगन्ता शिष्टः । तदनभ्युपगन्ता बौद्धोऽशिष्टः । वैदिकेष्वपि शिष्टाशिष्टव्यवहारस्तु वेदविहितनिषिद्धकरणाकरणतद्विपरीतव्यवहारानिबन्धनः । तत् सिद्धमेतत् फलप्रमाणयोः सम्भवाद् ग्रन्थादौ मङ्गलमाचरणीयं, शिष्याशिक्षार्थं च ग्रन्थे निबन्धनीयम् ॥

तत्र तावद् दर्शनभेदोऽभिधीयते । द्विविधं दर्शनं वैदिकावैदिकभेदेन । वैदिकमपि त्रिविधं तर्कतन्त्रसाङ्ख्यभेदात् । तर्कोऽपि द्विविधः वैशेषिकनैयायिकभेदेन । तन्त्रं मीमांसा । सा च शब्दार्थभेदेन द्विविधा । व्याकरणमहाभाष्यादिरूपा शब्दमीमांसा । वेदवाक्यविचाररूपा त्वर्थमीमांसा । सापि द्विविधा । कर्मकाण्डविचाररूपा पूर्वमीमांसा । ज्ञानकाण्डविचाररूपा तूत्तरमीमांसा । आद्यापि भाट्टप्राभाकरभेदेन द्विरूपा द्वादशलक्षणी । देवताया विग्रहवत्त्वाविग्रहवत्त्वादिविचाररूपा आष्टलक्षणी पूर्वमीमांसायामेवान्तर्भूता । चतुर्लक्षणी तूत्तरमीमांसा । साङ्ख्यमपि सेश्वरनिरीश्वरभेदेन द्विविधम् । तत्र सेश्वरं योगशास्त्ररूपम् । निरीश्वरमपि प्रकृतिपुरुषतद्विवेकप्रतिपादनरूपम् । अतो वैदिकदर्शनं योगसाङ्ख्यपूर्वोत्तरमीमांसानैयायिकवैशेषिकभेदेन षोढा भिद्यते । अवैदिकमपि बौद्धचार्वाकार्हतभेदेन त्रिप्रकारम् । बौद्धं च माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकभेदेन चतुर्विधम् । तत्र वैभाषिकपक्षे बाह्याः पदार्थाः प्रत्यक्षसिद्धाः । सौत्रान्तिकस्य त्वनुमेयाः । बुद्ध्याकारोऽनुमापकः । योगाचारस्य क्षणिकज्ञानं परमार्थः । बहिष्ट्वं तत्रारोपितम् । त्रयाणामपि सर्वं क्षणिकमेवेति सिद्धान्तः । माध्यमिकस्य मते शून्यमेव परमार्थः । तत्रैव सर्वं कल्पितमिति । चार्वाकस्य तु भूतचतुष्टयरूपो देह एवात्मा । प्रत्यक्षमेव प्रमाणम् । नास्ति परलोक इति मतम् । आर्हतं जैनकमित्येकमेव । तस्य देहव्यतिरिक्तो देहपरिमाण आत्मा सततोर्ध्वगमनमूर्तिः । सर्वं चानैकान्तिकं सदसद्रूपमिति ॥

तत्रादौ वैशेषिकं दर्शनं दर्शयामः । तत्र द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाख्याः सप्तैव पदार्थाः । अयोगान्ययोगव्यवच्छेदार्थ एवकारः । तत्र सप्त पदार्था एवेति विशेषणसङ्गत एवकारः शङ्खः पाण्डुर एवेतिवदयोगं व्यवच्छिनत्ति । तेन पदार्थानां न्यूनसङ्ख्यानिरासः । पदार्थाः सप्तैवेति विशेष्यसङ्गत एवकारोऽन्ययोगं व्यवच्छिनत्ति । यथा पार्थ एव धनुर्धर इति । तेन सप्तभ्यो बहिर्भूतस्य न पदार्थत्वम् ॥

नन्वभावस्य न पदार्थत्वं तस्य पदार्थाभावरूपत्वादिति चेत् । मैवम् । द्विविधो हि पदार्थः, भावरूपोऽभावरूपश्च इत्यभ्युपगमात् । अन्यथा तस्य शास्त्रे परीक्षणानुपपत्तेः । परीक्षितश्चाभावः । अनादिः सान्तः प्रागभावः । सादिरनन्तः प्रध्वंसः । अनादिरनन्तः संसर्गाभावो-

ऽत्यन्ताभावः । तादात्म्याभावोऽन्योन्याभाव इति । किञ्च पदार्थलक्षणस्य तत्र सत्त्वादभावः पदार्थः । लक्षणं ह्यभिधेयत्वं प्रमेयत्वं वा । अभावोऽप्यभावशब्दाभिधेयः चक्षुरादिप्रमाणगम्यश्च । तस्मात् सिद्धं सप्त पदार्था एवेति ॥

पदार्थस्य सतोऽत्रैवान्तर्भावादन्ययोगव्यवच्छेदोऽपि सिद्ध एव । तत्र सकलपदार्थाधारत्वात्, द्रव्यलक्षणत्वेन सन्निहितत्वात्, जात्याधारत्वात्, त्रिष्वेव वर्तमानत्वात्, सामान्यप्रतियोगित्वात्, तत्सम्बद्धत्वात्, तद्विरोधित्वाच्च द्रव्यादीनामुद्देशक्रमः । गुणात्यन्ताभावविरोधिमद् द्रव्यम् । अत्यन्ताभावविरोधिनश्च गुणतत्प्रागभावप्रध्वंसाः । तथाच उत्पन्नं द्रव्यं क्षणमगु(णी ? णं) तिष्ठतीति न्यायेन प्रथमक्षणे गुणाभावेऽपि तत्प्रागभाववत्त्वेन द्रव्यत्वान्नाव्याप्तिः । तथा प्रलयेऽपि कार्यविनाशरूपे पार्थिवपरमाणूनां गुणप्रध्वंसवत्त्वेन द्रव्यत्वात् तत्रापि नाव्याप्तिः । अन्यदा गुणवत्त्वान्नाव्याप्तिः । गुणवद् द्रव्यमित्यादिचिरन्तनलक्षणानामत्रैव तात्पर्यम् । समवायिकारणत्वात्यन्ताभावानधिकरणं वा द्रव्यम् । समवायिकारणत्वात्यन्ताभावस्तु गुणादौ वर्तते न द्रव्ये । तस्य कदाचित् समवायिकारणत्वात् । तथाच प्रलये कार्याभावेन गगनादीनां समवायिकारणत्वाभावेऽपि नाव्याप्तिः ॥

ननु गुणादावपि शक्तिसङ्ख्यासादृश्यानां पदार्थान्तराणां सद्भावात् तस्यापि तानि प्रति समवायिकारणत्वसम्भवात् तत्रातिव्यापकं लक्षणमिति चेत् । मैवम् । शक्तिस्तावन्न पदार्थान्तरं, कारणतास्वरूपत्वात् तस्याः । यद् वस्तु यत्र कारणं, तत् तत्र शक्तमित्युच्यते । ततः शक्तिकारणतयोः पर्यायतैव । यदुच्यते शक्तिवादिभिर्मीमांसकैः — यदि वह्न्यादिस्वरूपमेव शक्तिः, तदा वह्न्यादेः स्वरूपे सत्यपि मणिमन्त्रादिसम्बन्धे दाहो न जायते । तदभावे च जायते । अतो दाहान्यथानुपपत्त्या वा मण्यादीनां प्रतिबन्धकत्वानुपपत्त्या वा स्वरूपातिरिक्तं किञ्चित् कल्प्यम् । सैव शक्तिरिति । तत् स्वरूपातिरिक्तकारणतयैवान्यथोपपद्यते । कारणता च सामग्री । सा प्रतिबन्धकसद्भावे प्रतिबन्धकाभावसहकार्यभावात् तत्र नास्ति कारणता । सैव प्रतिबध्यते च । अतो नार्थापत्तिः शक्तौ पदार्थान्तरे मानम् ॥

ननु स्वरूपशक्त्यभावेऽपि व्रीहीन् प्रोक्षति ग्रहं सम्मार्ष्टीत्यादि- विधिविहितप्रोक्षणादिजन्या काचिदाधेयशक्तिरस्ति । अन्यथा अप्रोक्षि- तासं(मर्षितव्रीह्या ? मृष्टव्रीहिग्रहा)दिभिः कर्मकरणे कर्म साङ्गं स्यात् । नच भवति । अतः प्रोक्षणादिजन्यः संस्कारः कल्प्यः । सैवाधेयशक्तिरिति चेत् । न । तत्रापि प्रोक्षणादिजन्यः संस्कारोऽदृष्टरूपो यजमान एवेत्यङ्गीकारात् । तदुक्तं कुसुमाञ्जलौ — "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः" इति । तस्मान्नाधेयशक्तिरपि पदार्थान्तरम् । अतः कारणतैव शक्तिः । किञ्च — "नित्ये नित्यैव सा शक्तिरनित्ये भावहेतुजा ।" इति वदद्भिः कार्यगुणादिगता शक्तिः गुणादिकारणादेव जायत इत्यभ्युपेयते । अतोऽपि न गुणादेः शक्तिं प्रति समवायिकारणत्वमिति नातिव्याप्तिः ॥

नापि सङ्ख्या पदार्थान्तरम् । गुणेष्वन्तर्भावात् तस्याः । तथाच काणादं सूत्रं—'रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानी'ति । ननु गुणादा- वपि सङ्ख्या प्रतीयते । चतुर्विंशतिर्गुणाः, पञ्च कर्माणि, त्रीणि सामान्यानि, बहवो विशेषाः, एकः समवाय इति । तत् कथं गुणेष्वन्तर्भाव इति चेद्, इत्थम् । द्रव्ये गुणादीनां सङ्ख्यायाश्च समवायादेकत्र समवायिलक्षणात् सम्बन्धाद् गुणादावपि जपाकुसुमसम्बन्धात् स्फटिकलौहित्यवदुपाधिवशात् प्रतीयते न वस्तुतः इति वैशेषिकसमयः । अतो न तत्समवायिकारणत्वम् । गुणादीनां स्वरूपभेदस्तु वर्तत एव । गुणादीनां तत्र न सङ्ख्या निमित्तम् । किन्तु तादात्म्याभाव एव । यथा सङ्ख्यासु स्वरूपभेदः तादात्म्याभाव- निमित्तः । अन्यथा तत्रापि स्वरूपभेदस्य सङ्ख्यानिमित्तत्वे अनवस्थैव स्यात् । तत्र त्वौपचारिकी सङ्ख्याप्रतीतिरिति यदि, तर्हि गुणादावपि न सा दण्डवारिता ॥

नापि सादृश्यं पदार्थान्तरम् । तस्य गुणावयवकर्मसामान्यरूपत्वात् । तथाहि — गोसदृशो गवय इति पुच्छखुरविषाणादिसामान्यम् । कम्बलो मषीव कृष्णः इत्यत्र गुणसामान्यम् । जवे गौरश्वसदृश इत्यत्र कर्मसामान्यम् । इत्यौपाधिकसामान्यमेव सादृश्यम् । तदुक्तं भट्टपादैः —

"सामान्यान्येव भूयांसि गुणावयवकर्मणाम् ।
भिन्नप्रधानसामान्यवृत्ति सादृश्यमिष्यते ॥"

इति । अस्यार्थः — भिन्नं पृथग्भूतं प्रधानं मुख्यं गोत्ववगयत्वादिरूपं सामान्यं येषु तेषु वृत्तिर्यस्य एवंविधं सद् गुणानामवयवानां कर्मणां च भूयांसि बहूनि सामान्यान्येव सादृश्यमिष्यते । भिन्नप्रधानसामान्येत्युपलक्षणं मुख्यैकवैधर्म्यस्य । अन्यथा एकजातीये गवादौ इदंगोसदृशः स गौरिति सादृश्यव्यवहारो न स्यात् । तस्माद् एकं मुख्यं वैधर्म्यमवलम्ब्य अन्येषां गुणादीनां सामान्यमादाय सादृश्यव्यवहार इति । अन्यथा वैसादृश्यमपि पदार्थान्तरं स्यात् । सामान्यादावपि सादृश्यसद्भावादित्यादिसादृश्यस्यापदार्थान्तरत्वसाधनयुक्तेरत्रापि सुवचत्वादिति न तत्समवायिकारणत्वं गुणादीनामिति । तस्मात् सिद्धं समवायिकारणत्वात्यन्ताभावानधिकरणं द्रव्यमिति ॥

तच्च द्रव्यं नवधा भिद्यते 'पृथिव्यापस्तेजो वायुराकाशकालदिगात्ममनांसि नवैव द्रव्याणी'ति काणभुजैरुक्तत्वात् । अत्राप्येवकारोऽयोगान्ययोगव्यवच्छेदार्थः । तथाच द्रव्यस्य सतोऽनवबाह्यत्वलक्षणमयोगं नवबाह्यस्य सतोऽद्रव्यत्वलक्षणमन्ययोगं च व्यवच्छिनत्त्येवकारः । द्रव्याणि नवैव नाधिकानीत्यन्ययोगव्यवच्छेदः, नव द्रव्याण्येवेति चायोगव्यवच्छेदः ॥

ननु कथमेवकारोऽयोगं व्यवच्छिन्द्यात्, वायोः पार्थिवत्वेन नवसङ्ख्यापूरकत्वाभावात् । तथाहि, वायुः पार्थिवः अनुष्णाशीतस्पर्शवत्त्वाद् गन्धवत्त्वाच्च, घटवत् । न चासिद्धो हेतुः । वायौ वाति सति सुरभिरसुरभिर्वा गन्धः प्रतीयते, शैत्यादिरहितस्पर्शश्च । वायोः पार्थिवत्वे रूपवत्त्वमपि स्यादिति चेद्, घ्राणेन्द्रियवदनुद्भूतरूपवत्त्वसम्भवात् । अत एव महतोऽपि वायोरचाक्षुषत्वसम्भवः । उद्भूतरूपं महद् द्रव्यं चाक्षुषमित्यभ्युपगमात् । तस्मात् पार्थिवो वायुरिति चेत् । मैवं मंस्थाः । गन्धवत्त्वं हि तावद् वायावसिद्धम् । तत्र पुष्पादिसम्बन्धे सत्येव सौरभ्यादेः प्रतीयमानत्वेन तदुपाधिकत्वात् । अन्यथा जलमपि पार्थिवं स्यात् । तत्रापि गन्धवत्त्वप्रतीतेः । यदि स्वाभाविकगन्धवत्त्वं वायौ, तर्हि यदा यदा वायुर्वायात्, तदा तदा गृह्येत गन्धः । स्पर्शोऽप्यनुष्णाशीतत्वमात्रो न पार्थिवत्वसाधकः । किन्तु पाकजत्वविशेषितः, घटादौ तथा दर्शनात् । तथाच पार्थिवत्वे साध्ये पाकजस्पर्शवत्त्वमुपाधिः, तस्य साध्यव्यापकत्वसाधनाव्यापकत्वसद्भावात् । यत्र यत्र पार्थिवत्वं साध्यं, तत्र पाकजस्पर्शवत्त्वं, यथा घटादौ । यत्र

यत्रानुष्णाशीतस्पर्शवत्त्वं साधनं, न तत्र पाकजस्पर्शवत्त्वम्। पक्षीकृते वायौ तदभावात्। नहि घटादाविव वायौ पाकात् काठिन्यादिस्पर्शो जायते। अत उपाधिदुष्टं प्रथमानुमानम्। द्वितीयं त्वसिद्धिदूषितम्। यच्च प्रसङ्गसाधनं घ्राणेन्द्रियवदित्यादि, तदपि न। रूपवत्त्वमात्रप्रसञ्जने हि तथा स्यात्। न चैवम्। किन्तु उद्भूतस्पर्शवतः पार्थिवस्योद्भूतरूपवत्त्वं प्रसज्यते। तथाच न तत्र व्यभिचारः। घ्राणेन्द्रिये रूपस्पर्शयोरुभयोरप्यनुद्भूतत्वात्। तस्माद् वायुरपार्थिवः, अपाकजस्पर्शवत्त्वात्। यदेवं तदेवम्। यथा जलादीति वायोः पारिशेष्यात् नवमद्रव्यत्वम्। प्रसक्तपार्थिवत्वनिषेधादन्यत्र चाप्रसक्तेः। अत एवकारादयोगव्यवच्छेदः सिद्धः॥

नन्वयोगव्यवच्छेदेऽपि अन्ययोगव्यवच्छेदो न सङ्घटीति, नवबाह्ययोः सुवर्णतमसोः प्रसिद्धद्रव्यविधर्मणोर्जागरूकत्वात्। तथाहि, सुवर्णं तावद् दशमं द्रव्यम्, पीतिमगुरुत्वाश्रयत्वेनातैजसत्वात्, नक्तंदिवमत्यन्ताग्निसंयोगे सत्यप्यनुच्छिद्यमानद्रवत्वाश्रयत्वेनापार्थिवत्वात्, नैमित्तिकद्रवत्वाधारत्वेनाजलत्वात्, रूपवत्त्वादेव वाय्वाद्यन्तर्भावस्य दूरापास्तत्वात्। अतः प्रसिद्धनवद्रव्यवैधर्म्याद् दशमं द्रव्यमिति नैयायिकैकदेशिनः। अत्र ब्रूमः। रूपवत्त्वादेव त्वदुक्तहेतोः सुवर्णं तावत् पृथिव्यादित्रिकान्तर्भूतम्। तत्रापि नैमित्तिकद्रवत्वाधिकरणत्वात् न जलम्। अत्यन्ताग्निसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधारत्वान्न पार्थिवम्। तेन परिशेषात् तैजसमेव सुवर्णम्। पीतिमगुरुत्वाश्रयत्वेन तन्निषेधस्तु न सम्भवति। उपष्टम्भकपार्थिवभागस्य तत्र विद्यमानत्वेन पीतिमगुरुत्वयोस्तदाश्रयत्वात्। उपष्टम्भकं नाम उत्पत्तिमारभ्य सहभूतं द्रव्यम्। यथा मणिप्रभा तैजसी, तद्गोलकस्तु उपष्टम्भकः पार्थिवः। तथा सुवर्णेऽपि पार्थिवो भागो विद्यत इति न कश्चिद् दोषः। यद्यपि सुवर्णेऽपि द्रवत्वमग्निसंयोगादुच्छिद्यत एव, अन्यथा तत्र द्रुतद्रुततरद्रुततमत्वादेरप्रतीतिप्रसङ्गात्। तथापि सुवर्णारम्भकपरमाणौ द्रवत्वं न नश्यति। घृतलाक्षादौ तु पार्थिवपरमाणावपि द्रवत्वं नश्यति। तथाचाग्निसंयोगेऽनुच्छिद्यमानद्रवत्वाधिकरणपरमाण्वारब्धत्वेनापार्थिवत्वं प्रसाध्य नैमित्तिकद्रवत्वाधारत्वेन चानाप्यत्वं प्रसाध्य एतदुभयव्यतिरिक्तत्वे सति रूपवत्त्वेन तैजसत्वं साधनीयमिति परिशेषात् सुवर्णस्य तैजसत्वसिद्धिः। अतो न दशमद्रव्यत्वं सुवर्णस्य॥

ननु तमो दशमं द्रव्यं प्रसिद्धद्रव्यवैधर्म्यात् । तथाहि मीमांसकाः—

"तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥"

इति । अयमर्थः—तमस्तावद् द्रव्यम् । गुणवत्त्वात्, पटवत् । तच्चाकाश-कालदिगात्मसु नान्तर्भवति, चलत्वात्, तेषां निष्क्रियत्वात् । नाप्यप्तनला-निलमनस्सु प्रविशति । नीलरूपवत्त्वात् । तेषां तद्राहितत्वात् । वायुमन-सोश्च रूपस्यैवाभावात् । इतरयोस्तु नैल्याभावात् । नापि तत् पृथिवी । पृथिवीत्वसहचरितस्पर्शाभावात् तमसि । स चानुद्भूतस्तत्रेति चेद्, उद्-भूतरूपस्य पार्थिवस्योद्भूतस्पर्शवत्त्वनियमात् । किञ्च पार्थिवं चेत् तमः, आलोकसहकृतचक्षुर्ग्राह्यं स्यात् । नीलोत्पलादिवत् । नच गुणवत्त्वमसिद्धम् । परापरविभागानामाश्रयत्वात् । दूरे तमः, समीपे तमः, गृहादिविभक्तं तमः इति प्रतीतेस्तेषां तत्र सिद्धेः । परापरशब्दो भावप्रधाननिर्देशः । विभाग इति संयोगस्याप्युपलक्षणम् । गृहसंयुक्तं तम इति प्रतीतेः सद्भावात् । क्रियादि-मत्त्वादेव नाभावस्तमः । तस्मात् तमसो दशमद्रव्यत्वान्नान्ययोगव्यवच्छेद इति प्राप्तम् । एवं प्राप्तेऽभिधीयते — तमो न दशमं द्रव्यं, तत्साधकहेतो-रसिद्धत्वात्, परत्वादिप्रतीतेरप्यालोकाभावविषयत्वेनोपपत्तेः । नापि नीलरूप-वत्त्वं तमसः, शौक्ल्याद्यभावेन तथा प्रतीतेः । यत्र शौक्ल्याद्यभावः, तत्र रूपवति नैल्यमिति व्याप्तेर्दर्शनात् । अत्र रूपाभावेऽपि शौक्ल्याद्यभावमात्रेण नीलं तम इति भ्रममात्रमस्ति । न नीलं रूपम् । नापि क्रियावत्त्वम् । तस्या दीपाद्युपाधिनिमित्तत्वात् । दीपादौ चलति सति तदभावस्य देशा-न्तरप्राप्तिं दृष्ट्वा चलतीति भ्रमः । अन्यथा नीलं नभ इति प्रतीत्या नभ-सोऽपि रूपवत्त्वसिद्धेः पृथिव्यादित्रयमेव रूपवदिति नियमभङ्गप्रसङ्गः । तस्मादालोकाभावस्तम इति काणादाः । तम आलोकाभावो भवितुमर्हति । आलोकनिरपेक्षचक्षुर्ग्राह्यत्वात् । प्रदीपाभाववत् । अन्यथा चाक्षुषभाव-रूपत्वे तमस आलोकसापेक्षचक्षुर्ग्राह्यत्वप्रसङ्गात् । अतस्तमसो भावरूपत्वा-भावान्नैव द्रव्याणीत्युपपन्नम् ॥

व्याप्तिपक्षधर्मतासिद्ध्यर्थं साधर्म्यवैधर्म्ये निरूप्येते । तत्र सप्तानामपि पदार्थानां प्रमेयत्वाभिधेयत्वे । षण्णां त्वस्तिप्रत्ययगम्यत्वम् । अभावस्य तु

निषेधप्रत्ययगम्यत्वम् । सामान्यविशेषसमवायानां नित्यत्वं ज्ञानेतरकार्यं प्रत्यकारणत्वं जातिरहितत्वम् । गुणादीनां पञ्चानां निर्गुणत्वनिष्क्रियत्वे । गुणकर्मणोरेवासमवायिकारणत्वम् । समवायिकारणप्रत्यासन्नमवधृतसामर्थ्य-मसमवायिकारणम् । द्विधा च प्रत्यासत्तिः । एका कार्यैकार्थप्रत्यासत्तिः । यथा तन्तुसंयोगस्य पटं प्रति कारणत्वे पटेन कार्येण सह तन्तावेकस्मिन् प्रत्यासत्तिः । अपरा कारणैकार्थप्रत्यासत्तिः । यथा तन्तुरूपस्य पटरूपं प्रति कारणत्वे पटरूपसमवायिकारणेन पटेन सह तन्तौ प्रत्यासत्तिः । द्रव्यादीनां त्रयाणां जातिमत्त्वार्थशब्दाभिधेयत्वकारणत्वानि पृथिव्यादीनां द्रव्यत्वजाति-योगः साधर्म्यम् । जातिव्यञ्जकं च गुणवत्त्वम् । समवायिकारणत्वं च । पृथिव्यप्तेजोवाय्वात्ममनसां द्रव्यत्वावान्तरसामान्यवत्त्वम् । पृथिवीजला-त्मनां चतुर्दशसङ्ख्यासङ्ख्येयगुणवत्त्वम् । पृथिव्यप्तेजोवायुमनसां मूर्तत्व-क्रियावत्त्वे । इतरेषां निष्क्रियत्वामूर्तत्वे । पृथिव्यादीनां पञ्चानां भूतत्वम् । भूतत्वमूर्तत्वे न जाती, परापरभावाभावात् । यत्र यत्र भूतत्वं, न तत्र तत्र मूर्तत्वम् । गगने व्यभिचारात् । नापि भूतत्वं परम् । यत्र यत्र मूर्तत्वं, न तत्र तत्र भूतत्वम् । मनसि व्यभिचारात् । अतो गगनमनसोः परस्परं व्यभिचारात् पृथिव्यादिचतुष्टये च सङ्कीर्णत्वान्न तयोर्जातित्वम् । किन्त्वौ-पाधिकधर्मत्वम् । परिच्छिन्नपरिमाणवत्त्वं मूर्तत्वम् । बाह्यैकेन्द्रियग्राह्यविशेष-गुणवत्त्वं भूतत्वम् । पृथिव्यादीनां पञ्चानामिन्द्रियप्रकृतित्वम् । गगनं विहाय चतुर्णां शरीरारम्भकत्वम् । तेषामेव स्पर्शवत्त्वम् । पवनं विहाय तेषामेव रूपवत्त्वद्रवत्ववत्त्वे । पृथिवीतेजसोर्नैमित्तिकद्रवत्वम् । जलभूम्यो-र्गुरुत्वरसवत्त्वे । एवं संक्षेपतः साधर्म्यमुदितम् । इदमेव साधर्म्यमितरेभ्यो व्यावृत्तबुद्धिहेतुत्वात् । वैधर्म्यं यथा—द्रव्यत्वं गुणादिभ्यः । वक्ष्यमाणमपि वैधर्म्यमनुवृत्तबुद्धिहेतुत्वात् साधर्म्यं च भवति । यथा गन्धवत्त्वं पार्थि-वानाम् ॥

तत्र नवानां द्रव्याणां मध्ये पृथिवीत्वाभिसम्बन्धः पृथिव्या वैधर्म्यं लक्षणं च, असाधारणधर्मत्वात् । असाधारणधर्मो हि लक्षणमित्युच्यते । पृथिवीत्वं नाम शीतस्पर्शासमानाधिकरणघटपटवृत्तिजातिः । यद्यपि साध-र्म्यमपि तावत् लक्षणमेव, तथापि वैधर्म्ये लक्षणत्वप्रसिद्धिः । इतरव्यावर्त-कत्वाकारेण वैधर्म्यम् । असाधारणत्वाकारेण लक्षणम् । तस्य तु प्रयोजनं

व्यावृत्तिर्व्यवहारो वा । तथाहि — पृथिवीतरेभ्यो भिद्यते पृथिवीत्वात् । या इतरेभ्यो न भिद्यते नासौ पृथिवी । यथा अबादीति व्यतिरेकी प्रयोगः । यद्यप्यबादयोऽपि परस्परं भिद्यन्ते, तथाप्यबादित्वाकारेणाबादिभ्यो न भिद्यन्ते, पृथिव्यपि न भवन्ति । अतस्तत्र व्यतिरेकव्याप्तिः । इतरपदेनात्राबादय एवोच्यन्ते, न पृथिवी । तेनाबादीनां पृथिवीसकाशाद् भेदे विद्यमानेऽपि अबादेरबादिर्न भिद्यते इति तत्र साध्याभावसिद्धिः । एवमबादीनामितरभेदसाधने प्रयोगो द्रष्टव्यः । व्यवहारपक्षेऽपि प्रयोगः । इदं गन्धयुक्तं द्रव्यं पृथिवीति व्यवहर्तव्यम् । पृथिवीशब्दवाच्यमिति यावत् । पृथिवीत्वात् । यत् पृथिवीति न व्यवह्रियते, न तत् पृथिवीत्वाक्रान्तम् । यथा अबादीति व्यतिरेकी । अबादिश्च पृथिवीति न व्यवह्रियते । पृथिव्यपि न भवति । इति साध्याभावसाधनाभावयोर्व्याप्तिसिद्धिः । पृथिवीत्वजातेरभिव्यञ्जकं गन्धवत्त्वं, गन्धवति पृथिवीत्वप्रतीतेः । ततो गन्धवत्त्वमपि लक्षणम् । तथा नीलरूपवत्त्वं पाकजरूपवत्त्वं च लक्षणं व्यञ्जकं च । सा च पृथिवी द्विविधा । नित्या च अनित्या च । नित्या परमाणुरूपा । अनित्या कार्यरूपा । नित्यायां प्रमाणं — पृथिवीत्वं नित्यवृत्ति । घटपटवृत्तिजातित्वात् । द्रव्यत्ववत् । तच्चाकाशादौ नित्ये वर्तते । घटत्वपटत्वयोरेकैकवृत्तित्वान्न व्यभिचारः । तद्गतसंयोगादेरजातित्वान्न तत्र व्यभिचारः । तथाच पृथिवीत्वाधारतया या नित्या व्यक्तिः सा परमाणुः । नचानेन हेतुना गगनवर्तित्वस्यापि साधनसम्भवादतिप्रसङ्ग इति युक्तम् । प्रथमस्य तर्कसहकृतत्वात्, द्वितीयस्य तदभावात् । तथाहि — यदि नित्या पृथिवी न स्यात्, तदा आरम्भकाभावात् कार्यमपि न स्यात् । कार्यस्यैवारम्भकत्वे मूलाभावेनानवस्थायामनन्तावयवारब्धत्वेन अजगजयोस्तुल्यपरिमाणत्वादित्यादितर्कः सहकारी प्रथमस्य ।

"यस्यानुकूलस्तर्कोऽस्ति स एव स्यात् प्रयोजकः ।"

इति न्यायात् । ततो नाभाससमानयोगक्षेमत्वमिति परमाणुसिद्धिः । यद्वा, सूक्ष्मपरिमाणापकर्षः क्वचिद् विश्रान्तः परिमाणतारतम्यत्वात् । महत्परिमाणतारतम्यवत् । यत्रापकर्षविश्रान्तिः स एव परमाणुः । अथवा आद्यावयवी स्वन्यूनपरिमाणावयवारब्धः अवयवित्वात् । घटवत् । स चावयवः परमाणुरेव । तर्कस्तूक्त एवानुसन्धेयः । कार्यरूपा द्विविधा अतीन्द्रिया

प्रत्यक्षा चेति। आद्यापि द्व्यणुकरूपा इन्द्रियरूपा च। आद्यायां मानं जालान्तरसूर्यकिरणमध्ये परिदृश्यमाना त्रसरेणुः सावयवार(ब्धौ ? ब्धा) महत्त्वे सति चाक्षुषत्वात्। पटवत्। गगनस्याचाक्षुषत्वान्न तत्र व्यभिचारः। यस्त्रसरेण्ववयवः तद् द्व्यणुकम्। पार्थिवेन्द्रियं तु घ्राणम्। तच्च नासाग्रवर्ति गन्धग्राहकम्। मानं तु गन्धोपलब्धिः करणपूर्विका क्रियात्वात्। छिदिक्रियावत्। तच्च परिशेषाद् घ्राणमेव। प्रत्यक्षापि शरीरविषयभेदेन द्विविधैव। शरीरमस्मदादीनां प्रत्यक्षसिद्धम्। ननु शरीरस्य पञ्चभूतात्मकत्वात् कथं पार्थिवत्वमिति चेन्न। प्रत्यक्षाप्रत्यक्षारब्धस्य वायुवनस्पतिसंयोगवदप्रत्यक्षत्वापातान्न पञ्चानां समवायिकारणत्वम्। किन्तु पृथिव्येव समवायिकारणम्। इतराणि निमित्तत्वेन सहकारिकारणानि उपष्टम्भकतया वर्तन्ते। अतोऽस्मदादिशरीरं पार्थिवमेव ॥

गृहारामादिक्षेत्रमणिवज्रादिरूपा विषयभूता सा प्रत्यक्षसिद्धा। मणिवज्रादिगोलकं पार्थिवम्। प्रभा तु तैजसी। ननु गोलकमपि कथं पार्थिवम्। तल्लक्षणस्य गन्धस्य तत्रानुपलम्भादिति चेन्न। तद्भस्मनि गन्धोपलम्भेन लाघवात् तस्यापि तत्परमाण्वारब्धत्वेन भस्मनीव गोलकेऽपि गन्धानुमानात्। अनुपलम्भस्त्वयोग्यत्वादभिभवाद्वा। अभिभावकं तु तेजोवयवादि ॥

ननु कथं परमाण्वादिभ्यः स्थूलपृथिव्युत्पत्तिरिति चेदेवम्—ईश्वरस्य सञ्जिहीर्षाप्राण्यदृष्टयोर्वशादन्त्यावयविस्थूलद्रव्यारम्भकपरमाणुषु क्रिया। ततो विभागः, ततोऽवयवसंयोगरूपासमवायिकारणनाशः। ततो द्व्यणुकनाशः। समवायिकारणावयवनाशात् त्र्यणुकनाशः। एवमन्त्यावयविपर्यन्तं कार्यं नश्यति। द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवि। यद्वा स्थूलावयवक्रियाविभागारम्भकसंयोगनाशेभ्यः स्थूलोऽन्त्यावयवी नश्यति। ततस्तदवयवतदवयवक्रियाविभागादिन्यायेन परमाण्वन्तं कार्यं नश्यति। ततोऽनारब्धद्रव्यादिकाः चतुर्विधपरमाणवस्तिष्ठन्ति। अन्येऽपि नित्यवर्गा आकाशकालदिगात्मानो मनोभिः सह आप्यादिपरमाणूनां रूपरसस्पर्शाः संख्यैकत्वपृथक्त्वगुरुत्वद्रवत्वानि सामान्यविशेषसमवायाः। कार्यगतं सामान्यं काले तिष्ठति। कार्याकार्यगतं तु स्वाधारे नित्ये अदृष्टरूपं कार्यं च तिष्ठति ॥

एवं कार्यमात्रलयरूपप्रलयानन्तरं चतुर्मुखब्रह्मणः शतवर्षान्ते ईश्वरस्य सिसृक्षा जायते । तत्सहकृतात् प्राणिनां भोजकादृष्टात् परमाणुषु क्रिया जायते । क्रिया तु आरम्भकपरमाणुद्वयसंयोगः । ततो द्व्यणुकम् । द्व्यणुकत्रयात् त्र्यणुकं, न तु परमाणुत्रयात्, महत्त्वानुपपत्तेः । परमाणुकार्यस्य द्व्यणुकवदणुत्वापत्तेश्च । ननु तर्हि द्व्यणुकद्वयात् त्र्यणुकं भवतु । न । कारणबहुत्वं विना कार्यमहत्त्वानुप(प)त्तेः । कारणमहत्त्वात् कारणबहुत्वात् प्रचयाद्वा हि कार्यमहत्त्वं जायते । अत्र द्व्यणुकस्य महत्त्वप्रचययोरभावात् तद्बहुत्वादेव त्र्यणुकमहत्त्वं जायते । उत्तरोत्तरमहत्त्वाधिक्यसिद्ध्यर्थं त्र्यणुकचतुष्टयाच्चतुरणुकं चतुरणुकपञ्चकात् पञ्चाणुकमित्यादिक्रमेण स्थूलाः पृथिव्यादयो जायन्ते । तत्र वाय्वनलजलपृथिवीक्रमेण सृष्टिरित्येकं मतम् । जलपृथिव्यग्निवायुक्रमेणेत्यपरम् । ततः पार्थिवतेजसोर्मिश्रणात् सुवर्णरूपब्रह्माण्डमध्ये चतुर्दशलोककल्पनायां तत्र ब्रह्मादिस्थावरान्तशरीराणि परमाणुद्व्यणुकक्रमेण जायन्त इति संक्षेपः ॥

बौद्धास्तु परमाणुसमूहादेव स्थूलं कार्यं जायते, पुञ्जात् पुञ्जोत्पत्तिन्यायेनेति वदन्ति । तेषां स्थूलं कार्यमतीन्द्रियं स्यात् । परमाणुभिः साक्षादारब्धत्वाद् द्व्यणुकवत् । इदमेकमित्यपि बुद्धिर्न स्यात्, परमाणुपुञ्जस्यानेकत्वात् । परमाणुसमूहरूपत्वाद्वा । एकमिति बुद्धिर्भ्रान्तेति चेन्न । तस्याः सर्वजनसिद्धत्वेन प्रामाणिकत्वात् । अत आरम्भवाद एव श्रेयानिति तार्किकाः ॥

इति पृथिवीप्रकरणम् ॥

---

अप्त्वजातियोगोऽपां लक्षणम् । वैधर्म्यं च आकाशावृत्ति । सरित्समुद्रवृत्तिजातिरप्त्वम् । सरित्त्वं समुद्रत्वं चैककवृत्तिद्रव्यत्वं, सत्ता चाकाशवृत्तिः । अतो न तैरतिव्याप्तिः । व्यावृत्तिर्व्यवहारो वा पूर्ववदेवानुमेयौ । इयांस्तु विशेषः । स्नेहवत्यो व्यक्तय आप इति व्यवहर्तव्या इति । तासां नित्यादिभेदः पूर्ववत् । नित्याः परमाणवः । कार्याः शरीरेन्द्रियविषयरूपाः । शरीरं जलपरमाण्वादिभिरारब्धं वरुणलोके आगमसिद्धम् । ननु जलारब्धं कथं भोगक्षममिति चेन्न । पृथिव्यवयवोपष्टम्भात् । एवं तैजसवायव्ययोरपि

द्रष्टव्यम् । भोगाश्रयत्वं च शरीरलक्षणम् । इन्द्रियं रसना मधुरादिरसग्राहिका । सा च जिह्वाग्रवर्तिनी । रससाक्षात्कारिप्रमाकरणमिन्द्रियम् । तल्लक्षणं तु रूपादिमध्ये रसस्यैव ग्राहकमिन्द्रियं रसनमिति । रसोपलब्धिः करणपूर्विका क्रियात्वात् छिदिक्रियावदिति सामान्यतो दृष्टेन परिशेषाद् रसनेन्द्रियसिद्धिः । विषयस्तु सरित्समुद्रकरकादिः । करका तु अदृष्टवशात् प्रतिबद्धद्रवं जलमेव । पश्चात् सांसिद्धिकद्रवत्वस्य दर्शनात् । सांसिद्धिकद्रवत्वं हि जललक्षणम् । तथा स्नेहवत्त्वम् । अपां गुणास्तु रूपरसस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्काराः । एत एव स्नेहरहिता गन्धसहिताश्च पृथिव्या गुणाः । तत्र जले रूपं शुक्लमेव । रसोऽव्यक्तमधुरः । स चामलक्यादिकषायद्रव्यभक्षणेनाभिव्यज्यते । स्पर्शः शीतः । एतत् त्रयमपि लक्षणम् । संख्यादयः प्रसिद्धाः । गुरुत्वं पतनाक्रिययानुमेयम् । द्रवत्वं सांसिद्धिकम् । स्नेहोऽप्यपामसाधारणो धर्मः । घृतादौ तु पार्थिवावयवसङ्गात् स्नेहाधिक्यं दृश्यते, नतु तद्गुणत्वेन । क्षीरादौ सांसिद्धिकद्रवत्वमपि जलावयवप्रवेशात् । जलावयवास्तु पीतोदकपरिणामरूपाः क्षीरे प्रविशन्ति । संस्कारस्तु जले वेगः स्थितस्थापकश्च । वेगस्तु सरित्सु । सेतुविमोक्षादौ स्थितस्थापकः ॥

इत्यप्प्रकरणम् ॥

---

तेजस्त्वजातियोगस्तेजसो लक्षणम् । वैधर्म्यं च पूर्ववदितरभेदादिसाधनम् । नित्यमनित्यं च पूर्ववत् । नित्यं परमाणुः । अनित्यं शरीरादि । शरीरं तैजसमादित्यादिलोके पुराणसिद्धम् । इन्द्रियं तैजसं चक्षुर्नयनगोलकस्थम् । लक्षणं तु रूपादिमध्ये रूपस्यैव ग्राहकमिन्द्रियम् । तच्च दूरस्थमपि द्रव्यादि गृह्णत् प्राप्यैव गृह्णाति । चक्षुःश्रोत्रे प्राप्यकारिणी । इन्द्रियत्वात् स्पर्शनवत् । जलादि व्यवहितमपि तस्य स्वच्छत्वात् प्राप्यैव गृह्णाति । सूर्यादिरश्मिवत् । रूपोपलब्धिः करणपूर्विका क्रियात्वादिति परिशेषाच्चक्षुस्सिद्धिः । विषयस्तु भौमादिचतुर्विधः । पार्थिवेन्धनसाध्यं तेजो भौमम् । तच्च संस्कृतमसंस्कृतमिति द्विविधम् । तत्र संस्कृतं गार्हपत्यान्वाहार्याहवनीयसभ्यावसथ्यादि । द्वितीयं तु लौकिकपाकसाधनम् ।

भौमस्य कारणानि तृणारणिमणयः । ननु सहकारिविरहप्रयुक्तकार्याभाववत्त्वं कारणत्वम् । दण्डचक्राद्यभावे मृदादि घटादिकार्यं न जनयति । मृदादिसहकार्यभावे दण्डादिकमपि घटादि न जनयति । अतः सहकार्यभावे एकैकस्मात् कार्याभावः । तथाच सहकारिविरहेण प्रयुक्तः प्रापितः कार्याभावो दण्डचक्रादिषु वर्तते इति तेषां कारणत्वम् । दण्डादौ सति घटादि जायते । असति न जायत इत्यन्वयव्यतिरेकाभ्यां कारणत्वं गृह्यते । तृणारणिमणिषु तत् कथं कारणत्वं ग्राह्यम् । व्यतिरेकव्यभिचारात् । तथाहि न तावदेतेषां वह्निजातीयं प्रति दण्डादेर्घटादाविव सहकारित्वमस्ति । मण्यरण्योरभावेऽपि तृणात् फूत्कारादिसहितात् पावको ज्वालायुक्तो जायते । मणेरपि तरणिकिरणप्रतिफलनसहकृतात् तृणारण्योरभावेऽपि वह्निर्जायते । अरणेरपि मथनादिसहकृतादितरद्वयाभावेऽपि कृशानुर्जायते । तथा चैकस्मिन्नसत्यप्यन्यस्माज्जायमानत्वादस्मिन्नसति न जायत इति व्यतिरेकाभावादेतेषु कथं कारणताग्रह इति चेत् । सत्यम् । तत्र वह्निपरमाण्वाद्यवयवास्तावत् समवायिकारणम् । तत्संयोगाश्चासमवायिकारणम् । न तयोर्विप्रतिपत्तिः । एकजातीययोरेव तयोरेकजातीयं प्रति कारणत्वात् । किन्तु निमित्तकारणेषु तृणारणिमणिषु विचारः । तत्र फूत्कारादिस्तोमे सति तृणादेरेव, तरणिकिरणप्रतिफलनादिस्तोमे सति मणेरेव, मथनसहकारिस्तोमे सत्यरणेरेव वह्निर्जायत इति व्यतिरेकोऽस्त्येव । नहि फूत्कारादिषु सत्सु मणेररणेर्वा वह्निर्भवति । मथनादिषु तृणान्मणेर्वा, सूर्यकिरणप्रतिफलनादिषु तृणादरणेर्वेति स्थितेः कारणग्रह इत्येके । अपरे तु वदन्ति—यथा कारणे तृणादौ सामग्रीवैजात्यं, तथा कार्येऽपि वह्नावनेकजातित्वमस्ति । तार्णत्वमारणेयत्वं मणिजत्वमिति । यथा प्रदीपादाववान्तरजातिः प्रत्यक्षाद्(?) दीपः सूक्ष्मोऽपि भवनान्तः प्रकाशयति, न तथा ज्वालाजटिलोऽपि काष्ठाग्निर्नितरां कारीषो वह्निरेवमवान्तरजातीयं प्रत्येव प्रत्येकं तृणादेः कारणत्वग्रह इति । एवं कारणत्वग्रहात् तृणारणिमणिभ्यो भौमं तेजो जायते इति सिद्धम् ॥

दिव्यं तेजः सौरविद्युच्चन्द्रनक्षत्रादि । उदर्यं जाठराग्निः अशितपीतादिपरिणामहेतुः देहोष्णरूपः । आकरजं तेजो रजतसुवर्णकांस्यसीसादि ।

तस्यं तैजसत्वं साधितमधस्तात् । तस्य गुणा रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्काराः एकादश । रूपं स्वपरप्रकाशकत्वलक्षणं शुक्लभास्वरत्वम् । तच्च सुवर्णादौ पार्थिवावयवोपष्टम्भाद् अभिभूतम् । स्पर्शस्तूष्ण एव । स च सुवर्णादौ अभिभूतः । प्रभाचक्षुषोस्त्वनुद्भूतः । प्रकारान्तरेण चातुर्विध्यं तेजसो वदन्ति—उद्भूतरूपमनुद्भूतस्पर्शमेकम् । यथा प्रभा । उद्भूतस्पर्शमनुद्भूतरूपमपरम् । यथा निदाघोष्णम् । उभयानुद्भूतमपरम् । यथा चक्षुः । उभयोद्भूतमन्यत् । यथा सूर्यादि । संख्यादिस्फुटं दृश्यते । द्रवत्वं तु सुवर्णादौ नैमित्तिकम् । संस्कारो वेगः स्थितस्थापकश्च । वेग ऊर्ध्वज्वलनादौ दृश्यते । स्थितस्थापकश्च तस्य प्रतिबन्धे निवृत्ते पुनस्तथैव स्थितिः । ननु गुरुत्वमपि सुवर्णादौ दृश्यत इति चेन्न । उपष्टम्भकपार्थिवगतत्वात् । तस्य द्रवत्वमपि तथेति चेन्न । तस्यात्यन्ताग्निना सह संयोगेऽप्यनाश्यत्वेन तैजसत्वादिति ॥

इति तेजःप्रकरणम् ॥

वायुत्वाभिसम्बन्धो वायोर्लक्षणम् । वैधर्म्यं च । व्यावृत्तिव्यवहारौ पूर्ववत् । सोऽपि नित्यः परमाणुरूपः । अनित्यो द्व्यणुकादिरूपः । तत्र शरीरमुपष्टम्भकपार्थिववशाद् भोगसमर्थं वायुलोके विद्यते । इन्द्रियं त्वगापादमस्तकव्यापि । तल्लक्षणं तु रूपादिषु मध्ये स्पर्शस्यैव ग्राहकमिन्द्रियं स्पर्शगुणद्वारा द्रव्यग्राहकम् । तत्र मानम् । स्पर्शोपलब्धिः करणपूर्विका क्रियात्वादिति । परिशेषात् तदिन्द्रियसिद्धिः । सा च त्वगेव । विषयस्तु द्विविधः बाह्याभ्यन्तरभेदात् । तत्राभ्यन्तरः पञ्चवृत्तिः प्राणः त्वगिन्द्रियगम्यः स्पर्शलिङ्गगम्यो वा । बाह्यस्तु स्पर्शशब्दधृतिकम्पलिङ्गैरनुमेयः ॥

ननु वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाधिकरणत्वात् पटवत् । नचासिद्धिः; वायौ वाति सति स्पर्शस्यानुष्णाशीतस्योपलम्भात् । नच निदाघोष्माणि व्यभिचारः । तस्य पक्षतुल्यत्वात् । नहि पक्षे पक्षतुल्ये वा व्यभिचार इति न्यायात् । अन्यथा पक्ष एव साध्यस्य सन्दिग्धत्वात् हेतोश्च निश्चितत्वात् सन्दिग्धव्यभिचार इति सर्वानुमानोच्छेदप्रसङ्गात् । तस्माद् वायुः

प्रत्यक्ष इति भाट्टाः । तन्न । प्रत्यक्षत्वमपि हि वायोः स्पार्शनत्वं वाच्यम् । न चाक्षुषत्वादीति । तथाच द्रव्यस्पार्शनत्वे उद्भूतरूपत्वमुपाधिः । घटादौ तथा दर्शनात् । निदाघोष्मणश्च पक्षतुल्यत्वस्य त्वयैवोक्तत्वात् । न तत्र साध्याव्याप्तिः, प्रभायामुद्भूतरूपत्वेऽपि स्पार्शनत्वाभावात् न समव्याप्तिरिति चेत् न । विषमव्याप्तेरप्युपाधित्वस्वीकारात् । अन्यथा ध्वंसस्य जन्यत्वेनानित्यत्वे साध्ये जन्यत्वावच्छिन्नसाध्ये भावत्वमुपाधिर्न स्यात् । यत्र भावत्वं, तत्र जन्यत्वे सत्यनित्यत्वमित्युपाधिपुरस्सराया व्याप्तेरात्मादौ व्यभिचारेण तस्य समव्याप्त्यभावात् । तस्मान्न वायुः प्रत्यक्षः, किन्तु अनुमेय एव । तथाहि — अनुष्णाशीतापाकजस्पर्शः क्वचिदाश्रितः गुणत्वात् रूपवदिति द्रव्यमात्रसिद्धौ धरादीनां त्रयाणां पाकजशीतोष्णस्पर्शवत्त्वेन, गगनादीनां स्पर्शरहितत्वेन तदाधारत्वबाधाद्, अष्टद्रव्यानाश्रितत्वे सत्याश्रितत्वेन हेतुना परिशेषाद् अष्टद्रव्यातिरिक्तं द्रव्यं सिध्यति । स एव वायुः । तथा प्रयत्नाद्यभावे सति द्रुमादौ यौ शब्दकम्पौ तौ स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यौ विशिष्टकम्पत्वात् नदीसंयोगजनितवेतसादिशब्दकम्पवत् । तथा अन्तरिक्षे तृणादिविशिष्टधृतिः स्पर्शवद्द्रव्यसंयोगजा विशिष्टधृतित्वात् जलादिधृततृणादिवत् । स एव धारको वायुः । तस्य नानात्वं प्राच्योऽयमित्यादिप्रत्ययात् सिध्यति । तस्य गुणाः स्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगा नव । स्पर्शः प्रत्यक्षः सङ्ख्यादयस्त्वनुमेयाः ॥

इति वायुप्रकरणम् ।

---

शब्दाश्रयत्वमाकाशस्य लक्षणम् । वैधर्म्यं च व्यावृत्त्यादि पूर्ववत् । स चैकः सर्वत्र शब्दलिङ्गेनैवानुमेयः । एकत्वेनैव व्यवहारसिद्धौ तन्नानात्वकल्पना गौरवम् । स च नित्यः परममहत्त्वाश्रयत्वात् आत्मवत् । परममहत्त्वं सकलमूर्तद्रव्यसंयोगत्वात् । तच्चैकत्वेन व्यापकत्वात् । कथं शब्देनानुमानमिति चेदेवम् । शब्दस्तावद् गुणः बहिरिन्द्रियव्यवस्थापकत्वात् स्पर्शवत् । गुणत्वात् क्वचिदाश्रितः । श्रोत्रेन्द्रियग्राह्यत्वाच्च नेतरद्रव्यगुणः । इतरद्रव्यगुणा रूपादयो न केऽपि श्रोत्रेन्द्रियग्राह्याः । अतः शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः । अष्टद्रव्यानाश्रितत्वे सति गुणत्वात् । न यदेवं न

तदेवम् । यथा रूपादीति । परिशेषान्नवमद्रव्यमाकाशः सिध्यति । तस्य गुणाः सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागशब्दाः षट्सङ्ख्याः । स्वगतमेकत्वं, द्वित्वादिकं तु विजातीयापेक्षया । तथैव पृथक्त्वम् । संयोगविभागौ तु मूर्तैरेव । परिमाणं परममहत्त्वम् । एतेऽनुमेयाः । शब्दस्तु प्रत्यक्षोऽनुमेयश्च । प्रत्यक्षस्तु श्रोत्रेन्द्रियग्राह्यः । कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम् । तत्र शब्दोपलब्धिरेव प्रमाणम् । इतरेन्द्रियग्राह्यत्वे बधिरस्यापि शब्दग्रहप्रसङ्गात् । ननु श्रोत्रस्यापि इन्द्रियत्वात् प्राप्यकारिता वाच्या । तत्र कथं प्राप्तिः । निरवयवत्वेन क्रियाभावात् स्वयमप्राप्तेः । शब्दस्य चाकाशगुणत्वेन श्रोत्रेण संयोगसमवाययोरसम्भवात् । तत् कथं शब्दग्रहणमिति चेत् । न । समवायेन ग्रहणात् । तथाहि भेर्यादिदण्डादिसंयोगात् ताल्वोष्ठपुटव्यापारद्वारा वा प्रथमं शब्दो जायते । स च जलमध्ये उपलादिप्रक्षेपे यथा तरङ्गः परितो जायते, यथा वा कदम्बगोलकं जायते, तथा आद्यः शब्दो भवति । तत्र भेर्याकाशसंयोगोऽसमवायिकारणम् । आकाशः समवायिकारणम् । भेरीदण्डसंयोगादिर्निमित्तकारणम् । तदनु शब्दासमवायिकारणका द्वितियादिशब्दा वीचीतरङ्गन्यायेन कदम्बगोलककेसरन्यायेन श्रोत्रपर्यन्तं जायन्ते । तत्र श्रोत्रसमवायात् तत्समवेतः शब्दो गृह्यते । स चोपान्त्यः । अन्त्यस्त्वतीन्द्रिय इति वदन्ति । दूराच्छीघ्रं शब्दागमने वायुरेव निमित्तम् । अत एव वायुप्रतिरोधे शब्दो न श्रूयते । अनुकूले च वायौ श्रूयते । तस्य चानित्यत्वं कृतकत्वादिहेतुभिः साधनीयम् । नन्वनुमानानां स एवायं गकार इति प्रत्यभिज्ञया बाधितत्वमिति चेन्न । प्रत्यभिज्ञायाः ज्वालाप्रत्यभिज्ञावत् भ्रान्तत्वात् । बाधं विना कथं भ्रान्त इति चेत्, इदानीमुत्पन्नोऽयं गकार इदानीं विनष्टोऽयमिति प्रत्ययेन बाधात् । ननु नेदं रजतमिति बाधे पुनस्तत्र तदानीमिदं रजतमिति भ्रान्तिर्नोदेति । शब्दे तु उत्पत्तिविनाशप्रत्ययानन्तरमपि स एवायं गकार इति प्रत्यभिज्ञा जायते । तदनु च तत्रैवोत्पत्तिविनाशप्रत्ययः । अतः कः कस्य बाधको बाध्यश्च कः इति न जानीम इति प्राप्तम् । अत्र चिन्तामणिकारः उभयोर्व्यवस्थां ब्रूते । प्रत्यभिज्ञा तु जातिविषयिणी । उत्पत्तिविनाशप्रत्ययस्तु व्यक्तिविषय इति उभयमबाध्यम् । यथा व्रीहिषु भुज्यमानतया विनष्टेष्वपि तानेव व्रीहीनुपभुञ्ज्महे इति प्रत्ययो जातिमवलम्बते, तद्वत् प्रकृतेऽपीति अनुमानस्य प्रत्य-

भिन्नाबाधो नास्त्येवेति शब्दानित्यत्वसिद्धिः । पराक्रान्तं च सूरिभिरिति विरम्यतेऽस्माभिः ॥

इत्याकाशप्रकरणम् ॥

---

परापरप्रत्ययगम्यत्वं चिरक्षिप्रयुगपत्प्रत्ययगम्यत्वं च कालस्य लक्षणं, वैधर्म्यं च । तथाहि बहुतरतपनपरिस्पन्दान्तरिते वस्तुनि पर इति, अल्पसूर्यपरिस्पन्दान्तरिते च वस्तुन्यपर इति प्रत्ययो वर्तते । तदुभयं सूर्यपरिस्पन्दविशिष्टं प्रतीयते । तपनक्रियायाः पिण्डसम्बन्धमन्तरेण तद्विशेषणकप्रत्ययो न भवति । सम्बन्धश्च न संयोगः, द्रव्यक्रिययोस्तदयोगात् । नापि समवायः, सूर्यसमवेताक्रियायाः पिण्डे समवायासम्भवात् । अतः पिण्डे तपनपरिस्पन्दसम्बन्धजनकं द्रव्यमास्थेयम् । तच्च द्रव्यं न मूर्तमेव । तस्य घटादिवदुभयसम्बन्धायोगात् । अत उभयसम्बन्धजनकं विभु द्रव्यमभ्युपेयम् । स एव कालः । आत्माकाशयोर्विशेषगुणवत्त्वेन घटादिवत् तपनपरिस्पन्दघटकत्वायोगात् । य(द्यदा ? द्या)त्माकाशौ अन्यत्र स्थितस्यान्यत्र सम्बन्धघटकौ स्यातां, दूरस्थद्रव्यगतं गुणाद्यन्यत्र सम्बध्नीयात् । नच कालेऽप्ययं दोषः, सिद्ध्यसिद्धिव्याघातात् । दिशस्तु सन्निकृष्टविप्रकृष्टयोः परापरप्रत्ययनिमित्तत्वेनैव सिद्धत्वात् । इति पारिशेष्यात् कालसिद्धिः । अनुमानं तु दिग्विपरीतपरापरप्रत्ययौ विभुद्रव्यसंयोगनिमित्तौ । परापरप्रत्ययत्वात् । दिक्कृतपरापरप्रत्ययवदिति । एवं चिरादिप्रत्यया अपि तपनपरिस्पन्दसम्बन्धजन्यत्वात् कालसाधकाः । बहुतरतपनपरिस्पन्दान्तरिते चिरप्रत्ययः । अल्पतरतपनपरिस्पन्दान्तरिते क्षिप्रप्रत्ययः । तपनपरिस्पन्दविशेषे बहूनां वर्तमानत्वं प्रत्ययो यौगपद्यं(?) सौरक्रियासम्बन्धघटकः काल एवेति । तस्या गुणाः सङ्ख्यादयः पञ्चानुमेया एव । एकत्वैकपृथक्त्वे स्वगतद्विपृथक्त्वादयस्तु विजातीयैः सह । परिमाणं तु परममहत्त्वम् । संयोगविभागौ तु मूर्तैः । आकाशादिभिर्विभुभिः सह संयोगो नास्त्येव । अन्यतरक्रियोभयाक्रिययोस्तत्कारणयोरभावात् । अजसंयोगाङ्गीकारे तु तादृशविभागोऽपि स्यादिति दुस्तरं व्यसनमित्यजसंयोगो नास्त्येव । लवत्रुटिनिमेषभेदाः सूर्यक्रियोपाधिरूपाः न कालस्वरूपभेदकाः इति काल एक एव ॥

इति कालप्रकरणम् ॥

---

कालविपरीतपरापरप्रत्ययनिमित्तत्वं दिशो लक्षणम्। वैधर्म्यं च। अल्पवयस्यपि पुरुषे दूरवर्तिनि परत्वबुद्धिः, बहुतरवयस्यपि सन्निकृष्टे अपर इति बुद्धिर्जायते। तदेते कालविपरीतपरत्वापरत्वे। तद्बुद्धेर्निमित्तं दिक्। कालस्य च एतद्विपरीतपरत्वापरत्वप्रत्ययहेतुत्वेनैव धर्मिग्राहकप्रमाणसिद्धत्वात्। पृथिव्यादीनां मूर्तत्वा(दीनां ? दिना) पूर्ववत् तन्निमित्तत्वनिरासात्। ततश्च यत्संयोगवशादेषा परापरबुद्धिः, सा दिशा। प्रयोगस्तु कालविपरीतपरत्वापरत्वबुद्धी विभुद्रव्यसंयोगनिमित्ते। निमित्तान्तरबाधे सति कार्यत्वात्। यन्निमित्तान्तरबाधे सति कार्यं तत् ततोऽतिरिक्तनिमित्तकम्। यथा पृथिव्यादिनिमित्तबाधे सति तदतिरिक्तात्ममनस्संयोगजन्यं सुखादीति। यद्वा सैव प्रतिज्ञा। परापरप्रत्ययत्वात्। कालकृतपरापरप्रत्ययवत्। सा चैका विभ्वी च। प्राच्यादिभेदस्तु सूर्यसंयोगोपाधिकः। प्रागञ्चत्यस्यां सूर्य इति प्राची। अवागञ्चत्यस्यामित्यवाची, दक्षिणा। प्रत्यगञ्चत्यस्यामिति प्रतीची। उदगञ्चत्यस्यामिति उदीची। ऐन्द्र्यादिदशभेदास्तु इन्द्राद्यधिपत्युपाधिभेदात्। पूर्वादिभेदोऽपि सूर्यसंयोगभेदादेव। तथाच सूर्यसंयोगं पिण्डे सङ्क्रामयन्ती परापरबुद्धिजनिका दिक्, सूर्यक्रियासङ्क्रामकस्तु काल इति भेदः॥

इति दिक्प्रकरणम्॥

---

आत्मत्वाभिसम्बन्ध आत्मलक्षणम्। वैधर्म्यं च आत्मा इतरेभ्यो भिद्यते आत्मत्वादित्यादि पूर्ववत्। ज्ञानवत्त्वं सुखादिमत्त्वं च प्रत्येकमात्मनो लक्षणम्। स च द्विविधः। परापरभेदात्। पर ईश्वरः। अपरो जीवात्मा। नित्यज्ञानेच्छाप्रयत्नवत्त्वं परस्य लक्षणम्। ईश्वरे प्रमाणमागमानुमाने।

"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः।
तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते॥"

इति श्रुतेः।

'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इति स्मृतेश्च। अनुमानं तु शरीराजन्यं जन्यं सकर्तृकम्। समवेतत्वे सति कार्यत्वात्। परिदृश्यमानकार्यवत्। जन्यमात्रस्य पक्षत्वे साध्याप्रसिद्धिः दृष्टान्ताभावात्। ततः शरीरेत्यादि। अजन्यं जन्यमिति विरोधः। ततः शरीरेति। तादृशं च जन्यं

पृथिव्यादि । ननु किमिदं सकर्तृकत्वं, कर्त्रा सह वर्तमानत्वं कर्तृजन्यत्वं वा । उभयथा(सु ? स्म)दादिना सिद्धसाधनं, जीवानां व्यापकत्वेन सर्वसंयोगसम्भवात्, भोजकादृष्टद्वारा जीवानामपि सर्वकार्यकर्तृत्वाच्च । तथाच सिषाधयिषितधर्माभावेन सन्दिग्धसाध्यवतः पक्षस्याभावात् आश्रयासिद्धो हेतुरिति चेन्मैवम् । उपादानादिगोचरापरोक्षज्ञानचिकीर्षाकृतिमतः कर्तृत्वात् । जीवानां चोपादानपरमाण्वादिविषयापरोक्षज्ञानादेरसम्भवात् । अदृष्टद्वारा जीवानामपि ज्ञानस्योपादानादिविषयत्वसम्भवादस्त्येव सिद्धसाधनमिति चेत् । न । विषयित्वं नाम ज्ञानेच्छाप्रयत्नानामेव । अतो नास्यात्मगुणस्य विषयित्वाभावः । ततोऽदृष्टजनकं ज्ञानमदृष्टसाधनमेव विषयीकरोति, नतु तज्जन्यकार्यस्योपादानादिकम् । यद्वा — अदृष्टाद्वारकेति विशेषणं देयं कर्तृत्वनिरुक्तौ । ध्वंसस्य सति कार्यत्वेऽपि न समवेतत्वं, जात्यादेः समवेतत्वेऽपि न कार्यत्वमिति न तयोर्व्यभिचारः । अङ्कुरादिकार्यं च स्वावयवे समवेतमिति नासिद्धिः । तथाच य उपादानादिज्ञानवान् स ईश्वरः । सर्वज्ञः स भवति नान्यः इति तत्सिद्धिः । न च शरीरजन्यत्वमुपाधिः, पक्षमात्रव्यावर्तकविशेषणवत्त्वेनोपाधेः पक्षेतरत्वात् । जन्यत्वमात्रस्योपाधित्वे साधनव्यापकत्वात् । न च पक्षे जन्यत्वमपि नास्ति । सावयवत्वेन तत्सिद्धेः । तथा शरीरविशेषणं पक्षमात्रव्यावर्तकं, कार्यस्यापि क्षित्यादेरकर्तृत्वे घटादेरपि तथात्वप्रसङ्गे प्रत्यक्षादिविरोधो बाधकस्तर्कः । ननु क्षित्यादिकमकर्तृकं शरीराजन्यत्वात् गगनवदिति सत्प्रतिपक्षते (इ ?)ति चेत्, अजन्यत्वमात्रस्यैवाकर्तृकत्वप्रयोजकत्वे विशेषणवैयर्थ्यात् । असिद्धिवारकत्वेन सार्थकं विशेषणमिति चेत्, तन्न । व्यभिचारवारकस्यैव हेतुविशेषणत्वात् । शरीराजन्यस्यापि सकर्तृकत्वे बाधाभावेनानुकूलतर्काभावाप्रयोजकत्वाच्च । "यः सर्वज्ञः सर्ववित्", "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतेः सर्वज्ञस्य कर्तृत्वात् । शरीरित्वे च जगन्निर्माणे सर्वज्ञत्वासम्भवात् । यद्वा ईश्वरो निर्माणकायमधिष्ठाय जगन्निर्मिमीते स्वयमशरीरोऽपि । तथाच शरीराजन्यत्वमसिद्धमेव । ततश्च क्षित्यादेः कार्यत्वेन कर्तरि सिद्धे स ईश्वरः सर्वज्ञः नित्यज्ञानेच्छाप्रयत्नवान् । ज्ञानादीनां नित्यत्वं विषयाजन्यत्वात् । अत एव विषयनियमाभावाच्च सर्वविषयत्वं तज्ज्ञानादीनाम् । तथा वेदः सव(कर्तृ)कः वाक्यत्वात्, अस्मदा-

दिवाक्यवत् । अर्थं बुद्‌ध्वा हि वाक्यं विरच्यते । तद्‌बोद्‌धृत्वं वक्तुरेव । अतस्तदभावे वाक्यत्वमेव न स्यादिति बाधकस्तर्कः । यद्वा वेदः सर्वज्ञकर्तृकः वेदत्वात् । न यदेवं न तदेवम् । यथेदानीन्तनवाक्यम् । यद्यपीदानीन्तनवाक्यमपि द्विकर्तृकत्वात् सर्वज्ञकर्तृपूर्वकं भवति, तथापि ताल्वोष्ठपुटव्यापारोऽस्मदादीनामेव । ईश्वरस्य तु उपादानाद्यभिज्ञतामात्रेण कर्तृत्वव्यपदेशः । वेदे तु भूतावेशन्यायेन वा निर्माणकायाधिष्ठानेन वा ताल्वादिव्यापार ईश्वरस्यैव । अतो न दृष्टान्ते साध्याव्यावृत्तिः । "अस्य महतो भूतस्य निःश्वसितमेवैतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस" इत्यादिश्रुतेः । "अहं सर्वस्य प्रभव" इत्यादिस्मृतेश्च । "वेदान्तविद्वेदविदेव चाहमि"त्यादि स्मृतेश्च । ननु वेदो नित्यः अस्मर्यमाणकर्तृकत्वात् गगनवत् इति मीमांसकाः । अध्यापकपरम्परायां वेदः सर्वदा वर्तत एव । प्रलयश्च नास्त्येव । "अस्य महत" इत्या(द्य ? दिर)र्थवाद एव । "ऋग्वेद एवाग्नेरजायत । यजुर्वेदो वायोः । सामवेद आदित्यात्" इत्यादेर्वाक्यादग्न्यादेरपि वेदकर्तृत्वप्रसङ्गः । अतो वेदस्य नित्यत्वान्न सर्वज्ञकर्तृकत्वमिति चेन्न । मुक्तकश्लोकादिना व्यभिचारात् । वेदस्येश्वरः कर्तेति गौतमादिभिः कर्तुः स्मर्यमाणत्वादसिद्धेः उक्तागमबाधश्च । नच सोऽर्थवादः, अपूर्वत्वात् । अग्न्यादेः कर्तृत्वेऽपि सर्वज्ञकर्तृकता न हीयते । द्विकर्तृकत्वसम्भवात् । यद्वा अग्न्यादिरूपेण ईश्वर एव सर्गादौ कर्ता । अतो न सत्प्रतिपक्षतास्य । तस्मादीश्वरोऽनुमानागमाभ्यां सिद्धः । तस्य ज्ञानं स(र्व ? र्वा)-विकल्पकरूपा प्रमा । इच्छाप्रयत्नौ च नित्यौ ॥

जीवात्मानस्तु प्रतिशरीरं भिन्नत्वादनन्ता एव । ते तु मानसप्रत्यक्षाः अहं जानामीत्यादौ अहमिति सर्वैरात्मा गृह्यते । एकः सुखी अपरो दुःखीति सुखादिवैचित्र्यात् तस्य नानात्वम् । सर्वत्र सुखादिकार्योपलम्भाद् विभुत्वम् । धर्माधर्मौ हि सुखदुःखयोः कारणम् । तयोश्च सुखदुःखकारणभूतविषयसम्बन्धं विना न तत्कारणत्वं सम्भवति । गुणस्य च गुणिद्वारेणैव सम्बन्धो वाच्यः । गुणिनश्च सम्बन्धो व्यापकत्वेनेति विभुत्वं सिद्धम् । विभुत्वाच्च नित्यः । देहेन्द्रियमनोबुद्धिप्राणव्यतिरिक्तः । देहस्तावदात्मा न भवति । रूपवत्त्वाद्, घटवत् । इन्द्रियमनोबुद्धयश्चात्मानो (न) भवन्ति करणत्वाद्, वास्यादिवत् । प्राणश्चात्मा न भवति । स्पर्श-

वत्त्वाद्, वायुवत् । अतिरिक्तात्मसिद्धौ किं मानमिति चेद्, बुद्ध्यादय एव मानम् । बुद्धीच्छादयः क्वचिदाश्रिताः गुणत्वाद्, रूपादिवत् । नचासिद्धो हेतुः । बुद्ध्यादयो गुणाः अरूपित्वे सत्यनित्यत्वे च सत्येकेन्द्रियग्राह्यत्वात्, स्पर्शवत् । नच ते भूतगुणाः, मनसैव गृह्यमाणत्वात् । ये भूतगुणाः, ते मनसैव न गृह्यन्ते यथा रूपादयः । नापि दिक्कालमनसां गुणाः । विशेषगुणत्वात् । ये तु दिगादिगुणाः, न ते विशेषगुणाः, यथा संख्यादयः इति । इतरबाधकसहकृतेन गुणत्वानुमानेनातिरिक्तद्रव्यसिद्धिः । यद्वा इतरत्र बाधे सति बुद्ध्यादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रिताः, अष्टद्रव्यानाश्रितत्वे सति गुणत्वात् । यदष्टद्रव्यातिरिक्तद्रव्याश्रितं न भवति, तदष्टद्रव्याश्रितत्वे सति गुणो न भवति । यथा रूपमिति व्यतिरेकी । एवञ्च बुद्ध्याद्याश्रयत्वेन पृथिव्याद्यतिरिक्तं द्रव्यमात्मा सिध्यति । तस्य गुणाः — संख्यादयः पञ्च सामान्यगुणाः । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्या नव विशेषगुणाः । अनित्यत्वास्पर्शवत्त्वे सति एकेन्द्रियग्राह्यत्वेन विशेषगुणत्वमेषां साधनीयम् । अहं सुखी, दुःखी, इच्छामि, द्वेष्मि, प्रयते, जानामि, इत्यादिप्रत्यक्षसिद्धा बुद्ध्यादयः । धर्माधर्मौ सुखदुःखादिकार्यानुमेयौ । भावना च स्मृत्यनुमेया । संख्यादयश्च प्रत्यक्षानुमानसिद्धाः ॥

इति आत्मपदार्थः ॥

---

मनस्त्वसमवायो मनसो लक्षणम् । वैधर्म्यं च । तच्चाणुपरिमाणं बाह्येन्द्रियानुग्राहकं स्वातन्त्र्येण सुखादिग्राहकं बहिरस्वतन्त्रं नित्यं च ॥

ननु मनो विभु, सर्वदा स्पर्शरहितद्रव्यत्वात्, कालवत् । ज्ञानासमवायिकारणसंयोगाधारत्वाद्वा आत्मवत् । अणुत्वे हि सुखदुःखादेरणुमात्रवृत्तित्वं स्यात् । असमवायिकारणदेशवृत्तित्वात् । विभुविशेषगुणानां भेर्याकाशसंयोगदेशवृत्तिशब्दवत् । मनसोऽणुत्वे तत्संयोगस्याप्यणुदेशत्वात् सुखादेरणुदेशापत्तिरिति चेन्न । प्रतिकूलतर्कपराहतत्वात् । यदि मनो विभु स्यादात्मनोऽपि विभुत्वेन तत्संयोगस्य शरीरमात्रवृत्तित्वेन सर्वेन्द्रियाणामेकदा विषयसंयोगे रूपादिसर्वज्ञानानां युगपदुत्पत्तिप्रसङ्गः । नचैवं व्यासङ्गानुपपत्तेः । व्यासङ्गो नामान्यासक्तस्य बहिरिन्द्रियाणां सकलविषय-

संयोगे सत्यप्येकज्ञानोत्पत्तिः । तथाच वदति, शब्दमश्रौषं, रूपादि नोपलब्धवान् इति । ननु दीर्घशष्कुलीभक्षणकाले शब्दस्पर्शरूपरसगन्धा युगपद् गृह्यन्त एव इति चेन्न । तत्रापि व्यासक्तस्ता(ल ?)वत् क्रमानुमानात् । शीघ्रं क्रमेण सावधानस्य भवन्तीति यौगपद्याभिमानः । किञ्च विभुत्वे सर्वदा सर्वाङ्गीणं सुखं स्यात् । आत्ममनस्संयोगस्य शरीरमात्रवृत्तित्वात् । विषयसम्बन्धेन प्रदेशवृत्तित्वे ममापि विषयसम्बन्धवशात् सर्वाङ्गीणं सुखं स्यात् । अतो नाणुमात्रत्वप्रसङ्गः । मनसोऽणुत्वे यदा येन बाह्येन्द्रियेण संयुज्यते, तदा तेन ज्ञानं भवतीति न यौगपद्यप्रसङ्गः । तव तु यौगपद्य-प्रसङ्ग एव । अतः प्रतिकूलतर्कपराहतत्वादनुमानद्वयमप्यप्रयोजकम् । द्वितीये तु साधनावच्छिन्नसाध्यव्यापक आत्मत्वमुपाधिः । ज्ञानासमवायिकारणसं-योगाधारत्वे सति (त ? य)त्र विभुत्वं तत्रात्मत्वमिति व्याप्तेः । न च सावयवं, स्पर्शरहितद्रव्यत्वेनानारब्धद्रव्यत्वात् । स्पर्शवतामेव द्रव्यारम्भकत्वनिय-मात् । तस्मात् परिशेषान्मनसोऽणुत्वं, निरवयवद्रव्यत्वान्नित्यत्वम् । तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगाः । परत्वापरत्वे तु दिक्कृते, न कालकृते । तच्चातीन्द्रियं सुखाद्यसमवायिकारणाधारत्वेनानु-मेयम् । सुखादयो मूर्तद्रव्यसंयोगासमवायिकारणकाः विभुविशेषगुणत्वात् शब्दवत् । यद्वा सुखाद्युपलब्धिः करणपूर्विका क्रियात्वादिति विशेषा-न्मनस्सिद्धिः ॥

इति मनःपदार्थः ॥

---

## अथ गुणाः ।

रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्व-बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मगुरुत्वद्रवत्वस्नेहसंस्कारशब्दाश्चतुर्विंशति-र्गुणाः । तेषां सामान्यलक्षणं—गुणत्वजातियोगः, कर्मान्यत्वे सति जाति-मात्राश्रयत्वं, सामान्यवानसमवायिकारणं गुणः, कर्मान्य इति वा । एतै-र्लक्षणैर्व्यावृत्तिव्यवहारौ साध्यौ । रूपादीनां प्रत्येकं रूपत्वाद्यभिसम्बन्धो लक्षणम् । गुणत्वे सति चक्षुरेकेन्द्रियग्राह्यत्वं स्पर्शनैकेन्द्रियग्राह्यत्वं रूप-स्पर्शयोर्लक्षणम् । रसनघ्राणेन्द्रियाभ्यां ग्राह्यत्वं क्रमेण रसगन्धयोः ।

श्रोत्रेन्द्रियग्राह्यत्वं शब्दस्य । गुणपदं सर्वत्र सम्बध्यते । रूपाद्युपलब्धिसाधनत्वं क्रमेण चक्षुरादीनां लक्षणं द्रष्टव्यम् । तत्र रूपं सितासितपीतहरितलोहितकपिलचित्रभेदात् सप्तविधं महत्यां पृथिव्यां प्रत्यक्षसिद्धं, परमाण्वादिषु कार्यगुणेनानुमेयम् । श्यामो गुणः पृथिव्यां स्वाभाविकः । इतरे परमाणुषु पाकजाः, द्व्यणुकादौ कारणगुणासमवायिकारणकाः । पाकस्तु वह्न्यादितेजस्संयोगः । रसगन्धस्पर्शा अपि पार्थिवपरमाणौ पाकजाः । इतरत्र कारणगुणपूर्वकाः । सर्वेषामपि गुणानां द्रव्यमेव समवायिकारणम् । देशकालादृष्टकर्त्रादि निमित्तकारणम् । असमवायिकारणमेदं तत्र तत्र वक्ष्यामः । कार्यगतरूपादीनां चतुर्णां परमाण्वाद्यवयवगतरूपादय एवासमवायिकारणम् । रसोऽपि मधुरतिक्तकटुकषायलवणाम्लभेदात् षड्विधः । ननु चित्ररूपमिव चित्ररसोऽपि किमिति नाभ्युपेयते, यथा षड्वर्णमिश्रे चित्रं रूपमिति व्यवहारः, तथा षड्रसमिश्रणे चित्ररसव्यवहारस्यापि सम्भवात् । सत्यम् । तथाप्यस्ति विशेषः । को विशेषः । अयं विशेषः । चित्ररूपानङ्गीकारे पटाद्यवयवी नीरूपः स्यात् । तथाचाचाक्षुषत्वप्रसङ्गः । विजातीयानां नीलपीताद्यवयवादीनामेकावयव्यारम्भकत्वे अवयवी न नीलः पीतारब्धत्वात्, नापि पीतः नीलारब्धत्वात् । एवमन्यदप्यूह्यम् । नचानेकविजातीयगुणवदारब्धत्वं, रूपस्य व्याप्यवृत्तित्वविरोधात् । अतश्चित्रावयवैश्चित्रमेकं रूपवदारभ्यते । तथा चित्ररसानङ्गीकारे न कश्चिद् दोषः । न किञ्चित् प्रमाणम् । चित्ररूपे तु प्रत्यक्षमेव प्रमाणम् ॥

गन्धो द्विविधः सुरभिरसुरभिश्च । सुरभिश्चम्पकादौ, असुरभिर्मेद्यादौ । स्पर्शोऽपि त्रिविधः — शीतोष्णानुष्णाशीतभेदात् । तृतीयोऽपि द्विविधः — पाकजापाकजभेदात् । गन्धः पृथिव्यामेव । रूपरसस्पर्शाः पाकजाः पृथिव्यामेव । शुक्लं रूपं मधुरो रसः शीतः स्पर्शश्च । जले शुक्लभास्वरं रूपम् । उष्णस्पर्शश्च तेजसि । अनुष्णाशीतोऽपाकजस्पर्शो वायौ । पृथिव्यां कठिनत्वादयः स्पर्शाः । एतेषु च त्रिषु प्रमाणं प्रत्यक्षानुमाने ॥

एकत्वादिव्यवहारहेतुर्गुणः संख्या । नित्यगतमेकत्वं नित्यम् । अनित्यगतं त्वनित्यम् । द्वित्वादिका परार्धपर्यन्ता संख्या त्वनित्यैव । अवयविगतैकत्वस्यावयवगतमेकत्वमसवायिकारणम् । अयमेकोऽयमेक इमौ द्वौ,

अयमेकोऽयमेकोऽयमेक इमे त्रय इत्याद्यपेक्षाजन्या बुद्धिर्द्वित्वादौ निमित्तम् । एकत्वद्वैकत्वत्रयाद्यसमवायिकारणमेकत्वं रूपादिवदेव यावद्द्रव्यभावि द्रव्यनाशाच्च विनश्यति । द्वित्वादिकमयावद्द्रव्यभावि । अपेक्षाबुद्धिनाशान्नश्यति, तयैव चोत्पद्यते ॥

मानव्यवहारहेतुः परिमाणम् । तच्चतुर्विधम्—अणुमहद्दीर्घह्रस्वभेदात् । अणुत्वं परमाणुमनस्सु नित्यम् । द्व्यणुके चानित्यम् । परमाणुद्वित्वासमवायिकारणकं परमाणुपरिमाणञ्च नारम्भकम् । नित्यपरिमाणत्वात् । गगनपरिमाणवत् । महत्त्वमपि व्योमादौ नित्यम् । त्र्यणुकादौ तु महत्त्वं कारणबहुत्वात् कारणमहत्त्वात् प्रचयाद्वा जायते । त्र्यणुके महत्त्वं कारणबहुत्वात् । घटादिपरिमाणं कारणमहत्त्वात् । तूलादिपरिमाणं प्रचयात् । प्रचयो नाम प्रशिथिलः संयोगः । ह्रस्वत्वदीर्घत्वे तु स्तम्भादौ वर्तमाने अनित्ये एव । केचित्तु अणुत्वसमानाधिकरणं ह्रस्वत्वं तद्वदेव द्विविधं, महत्त्वसमानाधिकरणं दीर्घत्वमपि तद्वदेव नित्यमनित्यञ्चेत्याहुः । चतुर्विधमपि परिमाणं यावद्द्रव्यभावि ॥

पृथगित्यसाधारणव्यवहारहेतुर्गुणः पृथक्त्वम् । एकपृथक्त्वमेकत्ववदेव । द्विपृथक्त्वादिकं तु द्वित्वादिवदिति ॥

संयुक्तव्यवहारासाधारणकारणं संयोगः । स च त्रिविधः—अन्यतरकर्मजः उभयकर्मजः संयोगजश्चेति । आद्यः स्थाणुश्येनयोः । द्वितीयो मल्लयोर्मेषयोर्वा । तृतीयस्तु कारणाकारणसंयोगात् कार्याकार्यसंयोगः । यथा तन्तुकेशसंयोगात् पटकेशसंयोगः । तन्तुः कारणं केशोऽकारणं, तयोः संयोगात् कार्यस्य पटस्याकार्यस्य केशस्य (च) संयोगः । कारणाकारणसंयोगः कर्मजः । कार्याकार्यसंयोगस्तु संयोगज एव, तयोः पृथक्कर्माभावात् । पूर्वकर्मणः पूर्वसंयोग एवोपक्षयात् । कर्मसंयोगावेवास्यासमवायिकारणम् । विभागविनाश्यश्च । क्रिया, क्रियातो विभागः, विभागात् पूर्वसंयोगनाशः, उत्तरसंयोगोत्पत्तिः । अतः कर्मोत्पत्तिकारणम् । विभागो विनाशहेतुः ॥

विभक्तप्रत्ययहेतुर्गुणो विभागः । सोऽप्यन्यतरकर्मज उभयकर्मजो विभाग(ज)श्चेति त्रिविधः । तत्राद्यः स्थाणुश्येनयोः । श्येनकर्मणैव हि तत्र विभागो जायते । द्वितीयो मल्लयोः । तत्र उभयकर्मणा विभागो जायते ।

तृतीयस्तु तन्तुकेशविभागात् पटकेशविभागः । प्रथमः कारणाकारणविभागोऽन्यतरकर्मजः उभयकर्मजो वा । कार्याकार्यविभागस्तु विभागज एव, तत्र कर्माभावात् । अन्यतरकर्मादित्रयमेव विभागस्यासमवायिकारणम् । संयोगाभाव एव विभाग इति चेन्न । विभागस्य संयोगनिरूप्यत्वात् । अभावश्च प्रतियोगिनिरूप्यः संयोगाभाव इति । विभागस्तु संयोगाभावकारणम् । विधिमुखेन प्रतीयमानत्वाच्च नाभावः, एतावसंयुक्तौ किन्तु विभक्ताविति भेदप्रतीतेश्च । संयोगविनाश्यश्च ॥

पर इति व्यवहारासाधारणकारणं गुणः परत्वम् । व्यवहारश्चाभिज्ञाभिवदनरूपः । तच्च कालकृतं दिक्कृतं चेति द्विविधम् । बहुतरतपनपरिस्पन्दान्तरितजन्मनि पदार्थे यत् परत्वं, तत् कालकृतम् । प्रमात्रपेक्षया दूरस्थे पदार्थे संयुक्तसंयोगबाहुल्यात् प्रतीयमानं यत् परत्वं, तद् दिक्कृतम् । तस्य दिक्कालपिण्डसंयोगोऽसमवायिकारणम् । अपेक्षाबुद्धिस्तु निमित्तकारणम् । अल्पतरतपनपरिस्पन्दान्तरितजन्मानं सन्निकृष्टं च पिण्डमपेक्ष्य परबुद्धेर्जायमानत्वात् । अपेक्षाबुद्धिविनाशविनाश्यं च ॥

अपरव्यवहारहेतुर्गुणोऽपरत्वम् । तदपि पूर्ववदेव द्विविधम् । अल्पतरतरणिक्रियान्तरितजन्मनि पिण्डे यदपरत्वं, तत् कालकृतम् । सन्निकृष्टे पिण्डे संयुक्तसंयोगाद् भवति यदपरत्वं, तद् दिक्कृतम् । तत्रापि कालदिक्पिण्डसंयोगोऽसमवायिकारणम् । अपेक्षाबुद्धिर्निमित्तकारणम् । बहुतररविस्पन्दान्तरितजन्मानं विप्रकृष्टपिण्डमपेक्ष्यापरबुद्धेर्जायमानत्वात् । तद्विनाशविनाश्यं च । परत्वाभाव एवापरत्वमिति चेन्न । विभागेनैव दत्तोत्तरत्वात् । कारणत्रयजन्यत्वाच्च नाभावः । अभावो हि निमित्तमात्राज्जन्यते, न त्रितयेन । यथा घटते प्रध्वंसो दण्डमात्रनिमित्तात् । अभावोऽपि किमत्यन्ताभावः प्रागभावः प्रध्वंसो वा । नाद्यः, तस्य नित्यत्वेनापरे परबुद्ध्यनुत्पादप्रसङ्गात् । नचैवं, सोऽप्यन्यापेक्षया भवति परः । यो यदपेक्षया अपरः स तदपेक्षया कदाचिदपि परो नेति चेत्, सोऽपि तदपेक्षया विप्रकृष्टश्चेत् परो भवत्येव । नापि द्वितीयः, समकाले अप्रतीतिप्रसङ्गात् । अत एव न तृतीयः, कालभेदेन सामानाधिकरण्यप्रसङ्गाच्च । तस्माद् भावरूपमपरत्वम् ॥

बुद्धौ बहुवक्तव्यसद्भावात् सा पश्चान्निरूपयिष्यते । सुखादयस्तु निरूप्यन्ते सूचीकटाहन्यायात् । अनुकूलतया निरुपाधिवेद्यं सुखम् । सुखसाधनं तु सोपाधिकं सदनुकूलवेद्यम् । सुखमेव तत्रोपाधिः । सुखादीनां चाष्टानामात्म(म)नस्संयोगोऽसमवायिकारणम् । सुखस्य धर्मः सन्निहितमसाधारणं कारणं निमित्तं दुःखस्य चाधर्मः । इष्टानिष्टदर्शनं च द्वयोर्निमित्तकारणम् । आत्मा तु बुद्ध्यादीनां समवायिकारणम् ॥

प्रतिकूलतया निरुपाधिवेद्यं दुःखम् । तत्साधनं तु सोपाधिवेद्यम् । न च सुखदुःखयोः परस्पराभावरूपत्वम्, अन्योन्यानिरूप्यत्वात् । तस्माद् द्वयमपि भावरूपम् । दुःखस्य चासाधारणकारणमधर्मः । तच्च दुःखमेकविंशतिप्रकारम् । गौणमुख्यभेदात् । तत्र शरीरं, घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि षडिन्द्रियाणि, गन्धरसरूपस्पर्शशब्दबुद्ध्यादयः षड् विषयाः, विषयाणां बुद्धयः षट्, सुखं दुःखं चेत्येकविंशतिप्रकारं गौणम् । एतच्च दुःखसाधनत्वाद् दुःखम् । मुख्यं तु फलरूपं दुःखम् । एतेषामेकविंशतिप्रभेदानामत्यन्तोच्छेदो मोक्षः ॥

ननु कथं दुःखविच्छेदे सुखस्याप्यभावेन तदनुभवाभावात् पाषाणवदवस्थानं मोक्ष इति चेन्न । सुखस्य दुः(खं ? खा)विनाभावितया दुः(खि ?-ख)त्वात् । तथापि दुःखमात्रमेव हेयं विरोधित्वात्, न सुखमपि । नहि पलालानि सन्तीति धान्यानि परित्यज्यन्ते कृषीवलैः, किन्तु यावदादेयं तावदादाय निवर्त्यते । एवमत्रापि सुखं ग्राह्यं दुःखमेव हेयमिति चेत् । सत्यम् । नहि धान्यन्यायोऽत्र क्रमते, किन्तु मधुविषसम्पृक्तान्नन्यायः । यथा मधुविषाभ्यां सम्पृक्तेऽन्ने विविच्यग्रहणं तस्य न सम्भवति, तथा दुःखमिश्रसुखमपि दुःखपरित्यागेनोपादानार्हं न भवति । अतस्तदपि मधुवत् त्याज्यमेव । अत आत्यन्तिकदुःखविमोक एव मोक्षः । ननु किमिदमात्यन्तिकत्वं नाम दुःखविमोकस्य इति । श्रूयतामवधानेन । दुःखप्रागभावासहचरितसमानाधिकरणदुःखध्वंसो मोक्ष इति तन्निर्वचनम् । अस्यार्थः—दुःखस्य योऽयं प्रागभावः, तेन सहचरितं सह वर्तमानं यन्न भवति समानाधिकरणमेकाधिकरणं दुःखम्, अर्थाद् दुःखप्रागभावेनेति गम्यते, तस्य ध्वंसो मुक्तिरित्यर्थः । दुःखध्वंसमात्रमेकाधिकरणदुःख-

ध्वंसो वा संसारदशायामप्यस्तीति तत्रातिव्याप्तिपरिहाराय दुःखेत्यादि । संसारे दुःखध्वंसो यद्यपि वर्तते, तथापि स दुःखप्रागभावसहचरितः । यत्र दुःखध्वंसस्तत्र भावितत्प्रागभावस्यापि सत्त्वं, मोक्षे तु भाविदुःखाभावात् चरमदुःखध्वंसस्य तत्प्रागभावसहवर्तित्वं नास्ति । तथापि शुकादिमुक्तेरस्मद्दुःखप्रागभावसहचरितत्वात् तत्राव्याप्तिमाशङ्कय समानाधिकरणेति । तथाचास्मद्दुःखप्रागभावस्य शुका(वर्ति ? वृत्ति)त्वान्नाव्याप्तिः । दुःखप्रागभावासहचरितत्वं समानाधिकरणत्वं च दुःखविशेष(ण ? णम् ।) ध्वंसविशेषणे हि सति चरमदुःखकाले संसारदशायामतिव्याप्तिः स्यात् । तदा उपान्त्यदुःखध्वंसस्योक्तलक्षणसद्भावात् । दुःखविशेषणे तु चरमदुःखध्वंसस्यैव मुक्तित्वं नोपान्त्यस्येति न कश्चिद् दोषः ॥

ननु यद्यपि दुःखाभावः कण्टकदुःखाभावे पुरुषार्थो दृष्टः, अनुभूयमानत्वात्, तथापि मोक्षो न पुरुषार्थः, ज्ञानस्यापि दुःखकोटिनिक्षिप्ततया तदानीमभावादतस्तत्र कथं प्रेक्षावतां प्रवृत्तिः । तदुक्तम्—

"दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते ।"

इति चेन्मैवम् । जीवन्मुक्तिदशायामेव तदनुभवसम्भवाज्जीवन्मुक्तिदशायामेव स्थित्वा योगाभ्यासजनितसाक्षात्कारेणागामिदुःखाभावानुभवाच्च । ननु कण्टकाद्यभावोऽपि न दुःखाभाव(ः ?) तया पुरुषेणार्थ्यते, अपितु तदनन्तरभाविसुखार्थतयेति चेत्, तर्हि जीवन्मुक्तिदशाभाविसुखार्थतयेति न कश्चिद् दोषः । तत्र ह्यनेकशरीराण्यास्थाय सुखभोगस्य भोक्तव्यत्वात् । किञ्च दुःखे सति कस्यापि वादिनो मते न मोक्ष इत्यविवादम् । तथाच तदभावस्यावश्यकत्वात् स एव मोक्षोऽस्तु नान्यदिति । नित्यसुखाभिव्यक्तिर्मुक्तिरिति मीमांसका भाट्टा भूषणं च । तन्न । तत्राभिव्यक्तिर्विज्ञानम् । तन्नित्यमनित्यं वा । आद्ये प्रमाणाभावात् सुखज्ञानयोरुभयोरपि नित्यत्वान्मुक्तसंसारिणोरविशेषप्रसङ्गः, सदा तदनुभवसम्भवात् । द्वितीये तु ज्ञानोत्पादनाय शरीराद्यपेक्षायां मुक्तस्य संसारित्वप्रसङ्गः । समलज्ञानसन्तानोच्छेदे विमलज्ञानसन्ततिर्मुक्तिरिति विज्ञानवादिनः । तन्न । समलज्ञानसन्तानस्यात्मत्वात् तदुच्छेदे विमलज्ञानस्योत्पादकाभावात् स्वोच्छेदस्यापुरुषार्थत्वाच्च । अत एव शरीरनाशो मुक्तिरिति चार्वाकमतमपास्तम् । आत्माभावे मुक्तेरपुरुषार्थत्वप्रसङ्गाच्च । मध्यमपरिमाणस्य जीवस्य सततोर्ध्वगमनं मुक्ति-

रिति जैनजनाः । (न ?) तत्र प्रमाणाभावाद् गन्तुः सावयवत्वेन सक्रियत्वेन च नाशप्रसङ्गात् । तस्माद् दुःखध्वंस एव मुक्तिरिति काणादाः ॥

इष्टव्यवहारहेतुर्गुण इच्छा । इच्छामीत्यनुभवसिद्धा । चिकीर्षाश्रद्धासङ्कल्पादय इच्छाविशेषाः । सुखमिच्छां दुःखं द्वेषम् इच्छाद्वेषौ प्रयत्नमिति न्यायेन सुखादिच्छा जायते प्रयत्नं च जनयति । अत एवेष्टसाधनताज्ञानादिच्छाद्वारा पुरुषस्य प्रवृत्तिरित्युच्यते । शास्त्रे इष्टं तु सुखमेव ॥

द्विष्टव्यवहारहेतुर्गुणो द्वेषः । मन्युः क्रोध इत्यादिपदवाच्यः । द्वे( षि ? ष्मी )त्यनुभवसिद्धः । दुःखजन्याप्रयत्नजनकः । अत एवानिष्टसाधनताज्ञानाद् द्वेषद्वारा निवर्तते । अनिष्टं च दुःखमेव । क्वचित् तत्साधनमपि ॥

आत्मधर्म उत्साहः प्रयत्नः कृत्युद्योगादिपदवदनीयः । चेष्टाव्यावृत्तये आत्मेति । अयं यत्न एवाख्यातवाच्यतया भावनेत्युच्यते । इच्छाद्वेषाभ्यां जायते शरीरक्रियाजनकश्च ॥

ननु स्पन्दव्यतिरेकेण प्रयत्नपदार्थो नास्तीति चेन्न । तदभावेऽप्यहं प्रयते इत्यनुभवात् । निद्राणस्य निश्चलेऽपि शरीरे श्वासेन प्रयत्नानुमानात् । स च द्विविधः । जीवनयोनिप्रयत्नश्चिकीर्षाधीनप्रयत्नश्चेति । तत्राद्यः श्वासनिमेषादिहेतुः । द्वितीयश्चेष्टादिहेतुः । आद्योऽनुमेयः । द्वितीयः प्रत्यक्षः ॥

श्रुत्यादिविहितक्रियासाध्यः पुरुषगुणो धर्मः । साक्षात् साध्यत्वमत्र विवक्षितम् । तेन स्वर्गादौ न प्रसङ्गः । प्रायश्चित्तसाध्यदुरितध्वंसे प्रसङ्गनिवारणाय गुण इति ॥

श्रुत्यादिप्रतिषिद्धक्रियासाध्यः पुंगुणोऽधर्मः । अत्रोभयत्र कार्यमेव प्रमाणम् । यत्राध्ययनकृष्यादीष्टसामग्र्यां समानायामपि फलवैचित्र्यं दृश्यते । तत्रादृष्टसामग्रीवैचित्र्यमेवानुमेयम् । कारणवैचित्र्यं विना कार्यवैचित्र्यासम्भवात् । अतोऽदृष्टसिद्धिरिति ॥

भावना तु वक्ष्यते । तया सह बुद्ध्यादयो नवात्मविशेषगुणाः ।

गुरुत्वमाद्यपतनासमवायिकारणम् । द्वितीयादिपतनस्य वेगजन्यत्वात् तद्वारणायाद्येति । तच्च पृथिवीजलवृत्ति । अतीन्द्रियं च । ननु सुवर्णादावपि तैजसे गुरुत्वं दृश्यते इति चेत्, तत्रोपष्टम्भकपार्थिवभाग एव तदुपलम्भात् । अतो न दोष इति ॥

आद्यस्यन्दनासमवायिकारणं द्रवत्वम् । द्वितीयादेः स्यन्दनस्य वेगः कारणम् । तद् द्विविधं — सांसिद्धिकनैमित्तिकद्रवत्वभेदात् । तत्राद्यं जल एव । द्वितीयं तु पार्थिवे घृतादौ तैजसे सुवर्णादौ । उभयं प्रत्यक्ष-सिद्धम् । ननूभयत्र गुरुत्वद्रवत्वलक्षणे गुणत्वविशेषणं द्रष्टव्यम् । अन्यथा तदाधारद्रव्येऽतिव्याप्तिरिति चेन्न । असमवायिविशेषणेन तद्व्यावर्तना-दिति ॥

स्निग्धव्यवहारहेतुर्गुणः स्नेहः स एव चिक्कण इत्युच्यते । स च द्विविधः । नित्यः परमाण्वाश्रयः । अनित्यः कार्याश्रयः । स च जलमात्र-वृत्तिः पार्थिवघृततैलादौ चोपष्टम्भकजलयोगाद् भासते, न स्वभावत इति न प्रसङ्गः ॥

स्वोत्पादकसजातीयोत्पादकत्वे सति स्वयं तद्विजातीय एकाश्रितो गुणः संस्कारः । यथा ज्ञानजातीयानुभवसमुत्पाद्या भावना ज्ञानजातीयस्मृति-जनिका स्वयं तद्विजातीया । तथा वेगः कर्मजातीयोत्पाद्यः कर्मजातीयोत्पा-दकः स्वयञ्च विजातीयः । स्थितस्थापकश्च वेष्टनक्रियाजन्यः तज्जनकः स्वयञ्च विजातीयः । स्वोत्पादकस्योत्पादकत्वमसम्भवीति जातीयग्रहणम् । कारणपूर्वके रूपादौ शब्दजन्ये शब्दजनके च शब्देऽतिव्याप्तिवारणाय स्वयं विजातीय इति । संयोगजन्यसंयोगजनककर्मवारणाय गुण इति । कर्मजन्यकर्मजनकसंयोगवारणाय एकाश्रित इति । ननु इच्छाया इष्टसाध-नत्वज्ञानजन्यायाः स्वविषयज्ञानजनकत्वात् स्वयं विजातीयत्वाच्चातिव्याप्ति-रिति चेन्न । (य?) इष्टसाधनताज्ञाने च ज्ञानत्वावान्तरजातिर्नास्ति परो-क्षत्वापरोक्षत्वाभ्यां परापरभावाभावात् । ज्ञानत्वाकारेण तु तन्नेच्छाहेतुः । द्वेषस्याप्यनिष्टसाधनताज्ञानजन्यत्वेन ज्ञानत्वस्यानवच्छेदकत्वात् । अतो न कश्चिद् दोष इति निर्दुष्टं लक्षणम् । स त्रिविधः वेगो भावना स्थितस्थापक-श्चेति । तद्व्यवहारहेतुत्वमेव तेषां लक्षणम् । तत्र वेग इष्वादौ । भावना आत्मनि । स्थितस्थापकः कटादौ ॥

आकाशविशेषगुणः शब्दः श्रोत्रेन्द्रियग्राह्यो वा गुणः । स च त्रि-विधः संयोगजो विभागजः शब्दजश्चेति । तत्राद्यो यथा भेरीशब्दः । तत्रा-काशः समवायिकारणम् । भेर्याकाशसंयोगोऽसमवायिकारणम् । दण्डभेरी-संयोगो निमित्तकारणम् । द्वितीयस्तु वेणुदलविभागजः । तत्र दलाकाश-

विभागोऽसमवायिकारणम् । दलद्वयविभागो निमित्तम् । शेषं पूर्ववत् । ननु भेरीदण्डसंयोगो वा दलद्वयविभागो वा किमिति असमवायी न भवति इति चेन्न । तयोः समवायिकारणप्रत्यासन्नत्वाभावात् । समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यं ह्यसमवायिकारणम् । आकाशभेरीसंयोगादेस्तत्सत्त्वात् । अतस्तावेव संयोगविभागावसमवायिनौ । तृतीयस्तु आद्यादिशब्दजन्यः । शब्दश्च वीचीतरङ्गन्यायेन कदम्बगोलकन्यायेन वा कर्णपथमवतीर्णो गृह्यते । स चान्त्य उपान्त्यो वा नाद्यादिः । वेष्टनाकारेणागमनं वीचीन्यायः । कदम्बगोलकन्यायस्तु यथा कदम्बपुष्पमध्यात् केसराः परितो जायन्ते, एवमाद्यः शब्दः संयोगाद् विभागाद् वा जायते । तत्परम्परा तु कर्णपथपर्यन्तमनुकूलवायुवशात् प्रवर्तते । तत्र पूर्वपूर्वशब्दाः परेषामसमवायिनः, उत्तरोत्तरशब्दनाश्याश्च । अन्त्यस्तूपान्त्यनाशनाश्यः । तस्य गुणत्वं प्रागेव प्रासाधि ॥

अथ बुद्धिर्निरूप्यते । बुद्धिरुपलब्धिर्ज्ञानमिति पर्यायः । ननु साङ्ख्यवदवान्तरभेदाः । अर्थप्रकाशो बुद्धिः । ननु वादवत् प्रकाशिका । बुद्धिजन्ये प्रकाशे ज्ञाततारूपे प्रमाणाभावात् । ननु ज्ञातः प्रकटः पट इति प्रत्यक्षमेव मानमिति चेन्न । तस्य विषयिविषयभावमात्रत्वे विषयत्वेन तदतिरिक्ताविषयत्वात् । अन्यथा इष्टो द्विष्टः प्रध्वस्तो घट इत्यादावपि विषयाश्रयधर्मापातात् । प्राकट्यस्वीकारेऽपि वर्तमाने समवायिनि घटादौ तद् भवेत् । अतीतानागतज्ञानविषये का गतिः । तत्राश्रयभावेन ज्ञानेन विषये प्राकट्यजननायोगात् । प्रत्यक्षाभावेनानुमानादेरप्यभावाद् इति । सा च बुद्धिर्द्विविधा । विद्या चाविद्या चेति । प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा विद्या । संशयविपर्ययस्वप्नानध्यवसायलक्षणा चाविद्या । तत्र विशेषादर्शने सति कोटिद्वयावलम्बि ज्ञानं संशयः । स च समानधर्मासाधारणधर्मविप्रतिपत्तिभेदात् त्रिविधः । तत्राद्यो यथा यथार्थायथार्थवर्तिज्ञानत्वसमानधर्मादिदं ज्ञानं प्रमाणमप्रमाणं चेति । द्वितीयो यथा गन्धवत्त्वादसाधारणधर्मादियं पृथिवी नित्यानित्या वेति । तृतीयो यथा शब्दो नित्य इति मीमांसकाः, अनित्य इति नैयायिकादयः । तत्र मध्यस्थस्य संशयः अयं शब्दो नित्योऽनित्यो वेति । त्रिष्वपि विशेषादर्शनादयं कारणम् । अन्यथा निश्चयानन्तर(म)पि समानधर्मादेः संशये सन्देहानुच्छेदप्रसङ्गात् । ऊहतर्कौ संशय

एवान्तर्भूतौ । यथा वीथ्यां पुरुषेणानेन भवितव्यमित्यूहः । स चानवधारणरूपत्वात् संशय एव । व्याप्यारोपे व्यापकारोपस्तर्कः । यदि कारणं न स्यात् कार्यमपि न स्यादित्येवंरूपः । स च स्वातन्त्र्येणार्थानिश्चायकत्वात् संशय एव । प्रमाणानुग्राहकश्च भवति । यदि घटोऽत्र नाभविष्यत्, तर्हि नोपालप्स्यत, तदभाववदिति प्रत्यक्षानुग्रहः । अनुमाने तु यद्यग्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति पक्षे विपक्षत्वजिज्ञासाविच्छेदस्तदनुग्रहः । शब्दे च 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र यदि यागः स्वर्गसाधनं न स्यात् तर्ह्याप्तोपदेशेन वेदेन न बोध्येत इत्याद्यूहनीयम् ॥

विपर्य(य)स्तु तदभाववति तत्प्रकारकं ज्ञानम्, अनिदंवृत्तिप्रकारकं ज्ञानं, व्यधिकरणप्रकारकं ज्ञानमित्यादि । तत्राद्यस्यायमर्थः — तस्य प्रतीयमानस्य रजतत्वाद्याकारस्याभाववति पुरोवर्तिनि परमार्थतः शुक्तिकाशकले, तत्प्रकारकं स रजतत्वादिः प्रकार आकारो यस्य तद् ज्ञानं विपर्यय इति । यथार्थज्ञानव्युदासाय तदभाववतीति । इच्छानिरासाय ज्ञानमिति ॥

द्वितीयस्याप्ययमर्थः — विशेष्ये पुरोवर्तिनि इदं न वर्तते यः प्रकारो रजतत्वादिः स प्रकार आकारो यस्य ज्ञानस्य तदिदं रजतमिति ज्ञानं विपर्यय इति ॥

तृतीयोऽप्येवं व्याख्येयः — इदन्त्वेन भिन्नोऽधिकरणो रजतत्वादिर्व्यधिकरणः स प्रकारो यस्य तद् ज्ञानं विपर्यय इति ॥

नन्विदं रजतमिति ज्ञानं विशिष्टं न भवति, येनान्यथाख्यातिः स्यात् । किन्तु इदमिति ग्रहणं रजतमिति स्मरणमिति ज्ञानद्वयम् । निरन्तरोत्पन्नतया तत्र भेदाग्रहादेकत्वाभिमानः । तथाच प्रयोगः — विवादाध्यासिताः सर्वे प्रत्यया यथार्थाः प्रत्ययत्वाद् अयं पट इति प्रत्ययवदिति प्राभाकराः । साङ्ख्याश्चाख्यातिमेव मन्यन्ते । तदसत् । सर्वानुभवसिद्धस्य भ्रमस्यापह्नोतुमशक्यत्वात् । एतावन्तं कालमिदं शुक्तिशकलं रजतमित्यभादिति हि सर्वानुभवः । किञ्च ज्ञानद्वये एकत्वाभिमान इति वदता भ्रमः स्वीकृत एव । ततो व्याघातः । अनुमाने तु

विवादाध्यासितपदेन किं विवक्षितं ज्ञानद्वयमेकज्ञानं वा । आद्ये सिद्धसाधनम् । तस्य यथार्थत्वमस्त्येव । द्वितीयेऽन्यथाख्यातिस्वीकारः, विशिष्टज्ञानस्यैव तथात्वात् । इदमिति धर्म्येव वस्तुतः शुक्तिकाशकलं रजताकारेण भासत इत्येवान्यथाख्यातिः । अतः प्रत्यक्षमेव प्रमाणं विपर्यये । अनुमानमपि । विमतं शुक्तिकाशकलं रजतज्ञानविषयं रजतोपायान्यत्वे सति रजतार्थिनां प्रवृत्तिविषयत्वात् सम्यग्रजतवदिति ॥

असदेव रजतं पुरोवर्तिनि भासते इत्यसत्ख्याति(वादि)नो (मा)ध्यमिकाः शून्यवादिनो बौद्धविशेषाः । तदप्यसत् । असत अपरोक्षावभासायोगात् । अन्यथा नरविषाणमपि प्रत्यक्षं भासेत ।

आत्मख्यातिवादिनः क्षणिकविज्ञानवादिनो योगाचारा बौद्धविशेषाः बुद्धिस्थे रजते बहिष्ठभिन्नत्वमारोप्यत इति मन्यन्ते । रजतं च बुद्धौ सदेवेति मेनिरे । तन्न । अ॰ बुद्धौ सतो बाधायोगात् । भवन्नपि बाधो न बहीरजतमिति स्यात् । बाधश्चेदं (न) रजतमिति दृश्यते । अतो नाख्यातिरसत्ख्यातिरात्मख्यातिर्वा (न?) समञ्जसम् । किन्तु अन्यथाख्यातिः समञ्जसा । न च बाधासम्भवः । इह बाधितस्य देशान्तरे सत्त्वाङ्गीकारात् ॥

विवसनास्त्वनैकान्तवादिनो जैनजनाः सदसद्रूपं रजतं रजतं मन्यन्ते । तद्दृष्टान्तेन च सर्वं प्रपञ्चमनैकान्तं वदन्ति । तथाहि तेषां मते पदार्थाः सप्त सम्मताः । जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा नाम । संक्षेपतस्तु जीवाजीवौ द्वावेव पदार्थौ । यथायोगं तयोरेवेतरेषामन्तर्भावः । बोधात्मको जीवः । जडवर्गस्त्वजीवः । जीवाजीवयोरिममपरं प्रपञ्चमाचक्षते पञ्चास्तिकाया नाम । तथाहि जीवास्तिकायः, पुद्गलास्तिकायः, धर्मास्तिकायोऽधर्मास्तिकायः आकाशास्तिकाय इति । अस्तीति काय्यन्ते शब्द्यन्ते इत्यास्तिकायाः । 'कै शब्दे' इत्यस्य स्वरूपम् । पुद्गलं शरीरम् । तत्र जीवास्तिकायस्त्रेधा — बद्धो मुक्तो नित्यसिद्धश्चेति । नित्यसिद्धो नाम अर्वाग्दर्शनमूलभूतः । मुक्तः संसाररहितः । बद्धः संसारी । इति जीवास्तिकाय(स्त्र ? त्र)यम् । पुद्गलास्तिकायः षोढा—पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमं चेति । एतानि पुद्ग(ला ? ल)साधकत्वात् तद्भेदाः ।

धर्मास्तिकायः प्रवृत्त्यनुमेयः । प्रवृत्तिः शास्त्रचोदितानुष्ठानं शास्त्रीयबाह्य-प्रवृत्तिश्च । ताभ्यामपूर्वाख्यो धर्मोऽनुमेयः । सततोर्ध्वगमनशीलो जीवः । तस्य देहेऽवस्थानेनाधर्मोऽनुमेयः । अधर्मेण ह्ययं देहे तिष्ठति । आकाशास्ति-कायो द्विधा—लोकाकाशोऽलोकाकाशश्चेति । तत्रोपर्युपरि स्थितानां लोका-नामन्तवर्ती लोकाकाशः । मोक्षस्थानमलोकाकाशः । तदेवं जीवाजीवौ पञ्चधा प्रपञ्चितौ । आस्रवसंवरनिर्जराः प्रपञ्च्यन्ते । एते त्रयोऽपि प्रवृत्ति-लक्षणाः । प्रवृत्तिश्च द्विधा सम्यङ् मिथ्या चेति । तत्र मिथ्याप्रवृत्तिरास्रवः । सम्यक्प्रवृत्ती तु संवरनिर्जरौ । आस्रावयति पातयति पुरुषं विषयेष्विति इ-न्द्रियप्रवृत्तिरास्रवः । इन्द्रियद्वारा पौरुषं ज्योतिर्विषयान् स्पृशद् रूपादिज्ञान-रूपेण परिणमत इति । अन्ये तु कर्माण्यास्रवमाहुः । तानि कर्तारमभिव्याप्य स्रवन्ति कर्तारमनुगच्छन्तीत्यास्रवः । सेयं मिथ्याप्रवृत्तिरनर्थहेतुत्वात् । शम-दमादिरूपप्रवृत्तिः संवरः । (साह्यास्रवः ? सहि) इन्द्रियप्रवृ(त्तिः?त्तिं) संवृणो-तीति संवर इत्युच्यते । निर्जरस्तु अनादिकालप्रवृत्तकर्मकषायकलुषपुण्यापुण्य-प्रहाणहेतुः तप्तशिलारोहणादिः । स हि निश्शेषं पुण्यापुण्ये सुखदुःखोपभोगेन नितरां जरयतीति निर्जरः । अथ बन्धः । स चाष्टवि(धः ? धं) कर्म । तत्र घातिकर्म चतुर्विधम् । ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमन्तरीयं चेति । अघातिकर्म चतुर्विधम् । वेदनीयं नामिकं गोत्रिकम् आयुष्कं चेति । तत्र ज्ञानावरणीयं यथा—सम्यग्ज्ञानं न मोक्षसाधनं नहि ज्ञानाद् वस्तुसिद्धिः, आशामोदकादिज्ञानेभ्योऽपि तृप्तिप्रसङ्गात् । इति विपर्ययः । दर्शनावरणीयं तु कर्म आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानम् । मोहनीयं तु कर्मानेकधा विप्रतिषिद्धेषु सूत्रकारैरुपदर्शितेषु मोक्षमार्गेषु विशेषानवधारणम् । अन्तरीयं तु कर्म मोक्षमार्गप्रवृत्तानां मोक्षविघ्नकरं ज्ञानम् । तानीमानि श्रेयोहन्तृ-त्वाद् घातिकर्माण्युच्यन्ते । वेदनीयं तु कर्म शुक्लपुद्गलाकारेण परिणति-हेतुः । तद्धि बन्धोऽपि निःश्रेयसपरिपन्थि न भवति, तत्त्वज्ञानाविघाति-त्वात् । नामिकं तु कर्म शुक्लपुद्गलारम्भकवेदनीयकर्मानुगुणम् । तद्धि शुक्लपुद्गलस्याद्यामवस्थां कललबुद्बुदमारभते । गोत्रिकं तु ततोऽप्याद्यं शक्तिरूपेणावस्थितमव्याकृतम् । आयुष्कं तु कर्म आयुः कायति कथयति उत्पादनद्वारेति व्युत्पत्त्या तथोच्यते । अत्रायं क्रमः—शुक्लशोणितव्यतिकरे जाते मिलितं तदुभयस्वरूपमायुष्कम् । तस्य देहाकारपरिणमनशक्ति-

गौत्रिकम् । शक्तिमति तस्मिन् बीजे कललाख्यद्रवावस्थाया बुद्बुदात्मकतायाश्चारम्भकक्रियाविशेषो नामिकम् । सक्रियस्य बीजस्य तेजःपाकवशादीषद्घनीभावः शरीराकारपरिणामहेतुर्वेदनीयमिति । तानीमानि चत्वारि शुक्लपुद्गलाश्रयत्वाद् अघातिकर्माणि । शुक्लं पुण्यं पुद्गलं शरीरम् । तदेतत्कर्माष्टकं पुरुषं बध्नातीति बन्धः । मोक्षस्तु विगलितसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखरूपस्यात्मनः उपरिदेशावस्थानमित्येके । अन्ये तु ऊर्ध्वगमनशीलो हि जीवो धर्माधर्मास्तिकायेन च बद्धः तद्विमोक्षादूर्ध्वं गच्छत्येव, स मोक्ष इति । एते सप्त पदार्था जीवादयः सद्भावान्तरभेदैरुपन्यस्ताः । तत्र सर्वत्र चेमं सप्तभङ्गीनयं नाम न्यायं योजयति । स्यादस्ति, स्यान्नास्ति, स्यादस्ति नास्ति च, स्यादवक्तव्यः, स्यादस्त्यवक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च नास्ति चावक्तव्यश्चेति । स्याच्छब्दः खल्वयं निपातस्तिङन्तप्रतिरूपोऽनेकान्तद्योती । तथाच स्यादस्तीत्युक्ते कथञ्चिदस्तीत्यर्थः । एवमुत्तरत्रापि योज्यम् ॥

सप्त चैकान्तत्वभङ्गाः कथं कदा च प्रसरन्तीत्यपेक्षायामनन्तविजयः प्रतिपादयामास —

"तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् ।
स्यान्नास्तीति प्रयोगः स्यात् तन्निषेधे विवक्षिते ॥
क्रमेणोभयवाञ्छायां प्रयोगः समुदायभाक् ।
युगपत् तद्विवक्षायां स्यादवाच्यमशक्तितः ॥
आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते ।
अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ॥
समुच्चयेन युक्तश्च सप्तमो भङ्ग इष्यते ।"

इति ।

अस्यार्थः — घटाद्यस्तित्वविवक्षायां स्यादस्ति कथञ्चिदस्तीत्यर्थः । घटादिनिषेधविवक्षायां स्यान्नास्ति कथञ्चिन्नास्तीत्यर्थः । क्रमेण घटास्तित्वनास्तित्वविवक्षायां समुदायभाक् प्रयोगः, कथञ्चिदस्ति कथञ्चिन्नास्तीत्यर्थः । युगपदस्तित्वनास्तित्वयोर्विवक्षायां वाचः क्रमवृत्तित्वादुभयं युगपदवाच्यमिति स्यादवक्तव्यार्थः । आद्यास्तित्वभङ्गोऽन्त्येनासत्त्वेन सह युग-

पदवाच्यमिति स्यादस्तिचावक्तव्यपदार्थः । अन्त्यश्चाद्येन भङ्गेन सह युगपदवाच्य इति स्यान्नास्तिचावक्तव्यपदार्थः । स्यादस्ति नास्तीत्ययं भङ्ग एकैकेन सह युगपदवाच्य इति स्यादस्ति नास्ति चावक्तव्यभङ्गार्थः । इमं सप्तभङ्गीनयं नित्यत्वैकत्वादावपि योजयन्ति । स्यादस्त्येकः स्यादस्ति नित्यमित्यादिना प्रकारेणानेकान्तः सर्वोऽपि पदार्थः । अत एवेदं रजतं नेदं रजतमिति प्रतीतिबाधौ सम्भवतः, सत्त्वात् प्रतीतिरसत्त्वाद् बाधश्च ॥

अत्राभिदध्महे — नायमभ्युपगमो युक्तः, एकस्मिन् विरुद्धधर्मयोः सत्त्वासत्त्वयोरसम्भवात् । सदसत्त्वे वस्तुनो धर्मौ, उत स्वरूपम् । नाद्यः । असत्त्वदशायामपि (अ ?)सत्त्वस्यानुवृत्तिप्रसङ्गात् । असत्त्वव(द ? त्) सत्त्वस्यापि वस्तुधर्मत्वात् । न द्वितीयः । सर्वदैकास्मिन् वस्तुनि द्वयप्रसङ्गात् । न कोऽपि सत्त्वासत्त्व द्वयमेकत्रानुभवति । काल(देशे ? भेदे)न देशभेदेन च तदनुभवेऽपि वस्तुनो द्वैरूप्यं न भवति । नहि देशान्तरे कालान्तरे चासत्त्वे स्वदेशे काले वाप्यसद् भवति प्रत्यक्षविरोधात् । अतो नैकस्मिन् धर्मिणि युगपत् सत्त्वासत्त्वादिविरुद्धधर्मसमावेशः सम्भवति, यथा शीतोष्णे एकत्र न सम्भवतः तद्वत् । अन्यथा य एते सप्त पदार्था निर्धारिताः एतावन्त एवंरूपाश्चेति, तत्रापि स्याद्वादः प्रसरेत् । ते तथैव वा स्युः, इतरथा हि वा । तथा स्युरतथा वेत्यनिर्धारितरूपं ज्ञानं संशयज्ञानवदप्रमाणमेव स्यात् । किञ्च निर्धारणमपि वस्तुत्वाविशेषात् स्यादस्ति स्यान्नास्तीति विकल्पोपनिपातादनिर्धारणमेव स्यात् । एवं निर्धारयितुरपि निर्धारणफलस्यापि स्यात् पक्षेऽस्तिता स्याच्च पक्षे नास्ति(ता) चेत्येवं सति एवम्भूतस्तीर्थकरः प्रमातृप्रमाणप्रमेयप्रमितिष्वनिर्धारिता(र्थ)स्तदुपदेष्टुं कथं शक्नुयात् । कथञ्च शिष्यास्तदभिप्रायानुसारिणः तदुपदिष्टेऽर्थेऽनिर्धारितरूपे प्रवर्तेरन् । ऐकान्तिकफलत्वनिर्धारणे सति तत्साधनानुष्ठानाय सर्वो लोकोऽनाकुलः प्रवर्तते नान्यथा । तथा पञ्चानामस्तिकायानां पञ्चत्वसङ्ख्यास्ति न वेति विकल्प्यमाना स्यात् तावदेकस्मिन् पक्षे । पक्षान्तरे तु न स्यात् । अतो न्यूनसङ्ख्यात्वमधिकसङ्ख्यात्वं वा प्राप्नुयात् । न चैषां पदार्थानां स्यादवक्त(व्यं ? व्यत्वं) सम्भवति । अवक्तव्याश्च नोच्येरन्, उच्यन्ते चावक्तव्याश्चेति विप्रतिषिद्धम् । उच्यमानाश्च तदैवावधार्यन्ते नावधार्यन्ते इति च विरुद्धम् । तदा तदवधारण-

(मस्ति ?)फलमस्ति वा नवेति विरुद्धम् । एवं तद्विपरीतमसम्यग्दर्शनमस्ति वा नास्ति वेति प्रलपन् मत्तोन्मत्त इव स्यात्, न प्रामाणिकः । स्वर्गापवर्गयोरपि पक्षे भावः पक्षे चाभावः, तथा पक्षे नित्यता पक्षे चानित्यता इत्यनवधारणायां प्रवृत्त्यनुपपत्तिः । ततश्चानादिसिद्धजिनप्रवृत्तानां स्वशास्त्रावधृतप्रभावानामयथावधृतस्वभावत्वप्रसङ्गः । अतो जीवादिपदार्थेष्वेकस्मिन् धर्मिणि(सत्त्वे सत्य)सत्त्वधर्मस्यासम्भवात्, असत्त्वे च सति सत्त्वासम्भवाद् असङ्गतमिति ॥

ननु अनेकान्तवादे अनुमानं परिवृत्यते । विमतं सर्वमनैकान्तं प्रमेयत्वात् । सामान्यविशेषवत् हेरम्बवत् नरसिंहवच्चेति । तत् प्रत्यक्षबाधविधुरीकृतम् उक्ततर्कपराहतं वा । तथाहि — प्रत्यक्षेण यावता भावानामुपलम्भः, तावतां नियतमेव रूपमुपलभ्यते । नानियतम् । अतोऽध्यक्षबाधः नित्यसिद्धजीवादिपदार्थे अनेकान्तश्च । तत्रानियतत्वाभावेऽपि प्रमेयत्वसम्भवात् । तत्राप्यानियतत्वेऽपसिद्धान्तः । किञ्च अनैकान्ते यत् प्रमाणमुपन्यस्तं, तत् प्रमाणमेव उताप्रमाणमपि । प्रथमे प्रमेयत्वस्य तत्रैव व्यभिचारः । चरमे सर्वभावानामनैकान्तत्वासिद्धिः, अप्रमाणत्वात् । अथ प्रामाण्यमस्तीति तत्सिद्धिः, तदा अप्रामाण्यमस्तीति तदसिद्धिरपीति । यश्चायं दृष्टान्तः सामान्यविशेषवदिति, स साध्यविकलः । सत्ताव्यतिरिक्तं द्रव्यत्वादि सामान्यविशेषवत् । तच्च सामान्यम् आश्रयान्तरात् स्वाश्रयस्य व्यावर्तकत्वादुपचाराद् विशेष इत्युच्यते । अतो न तत्राकारद्वयमस्ति । यच्चेदं नरसिंहहेरम्बोदाहरणं तदपि साध्यविकलम् । हेरम्बो नाम नरावयवैर्गजावयवैश्च सम्भूयारब्धः कश्चिदवयवी । तस्यैकत्वान्न द्वैरूप्यम् । तथा नरावयवैः सिंहावयवैश्च सम्भूयारब्ध(क ?) एक एवावयवीति न द्वैरूप्यसम्भवः । अतो नानैकान्तोऽनुमानं प्रमाणम् । अपिच आत्मनः शरीरपरिमाणत्वेऽनित्यत्वप्रसङ्गः, सावयवत्वाद् घटादिवत् । तत एव तद्वदात्मनः सुखज्ञानरूपत्वमपि न सम्भवति । किञ्च शरीरपरिमाणत्वे यदा अजादिसूक्ष्मपरिमाणं कर्मवशाद् गजादिशरीरं प्रविशति, तदा तत्परिमाणः कथं भवेत् । गजपरिमाणो वा कर्मवशादजशरीरं प्रविशति, तदा तत्र न स मीयेत । एवं बहुदोषत्वादुपेक्षणीयमेतत् । एवञ्चाख्यात्यसत्ख्यात्यात्मख्यातिसदसत्ख्यातिपक्षाणामसम्भवादन्यथाख्यातिरेव विपर्यय इति स्थितः ॥

निद्रादुष्टमनोजन्यं ज्ञानं स्वप्नः । न च स्वप्नो विपर्यय एव अतस्मिंस्तद्बुद्धित्वादिति वाच्यम् । जागरावस्थायां विपर्ययस्य प्रसिद्धत्वात् । स्वप्नेऽपि प्रत्यक्षादिमानव्यवहारवत् संशयविपर्ययादिव्यवहारस्यापि सद्भावात् पृथगेव स्वप्नः ॥

अनध्यवसायस्तु किंसंज्ञकोऽयमिति संज्ञाविशेषजिज्ञासारूपः । न चायं संशय एव, कोटिद्वयापरामर्शात् । एवमविद्या चतुर्विधा व्याख्याता ॥

इदानीं विद्याभेदाः प्रतिपाद्यन्ते । तत्र साक्षात्कारिप्रमाकरणं प्रत्यक्षम् । साक्षात्कारिप्रमैव फलम् । साक्षात्कारित्वं च ज्ञानगतावान्तरभेदः । स चेन्द्रियजन्यज्ञानवृत्त्यनुमित्याद्यवृत्तिस्मृतित्वान्यजातिः । यथार्थानुभवः प्रमा । अबाधितपरोक्षप्रत्ययः प्रत्यक्षप्रमा । सा च द्वेधा — योगिप्रत्यक्षायोगिप्रत्यक्षभेदात् । योगिप्रत्यक्षमपि द्विविधम्— युक्तावस्थायां वियुक्तावस्थायां चेति । आद्यं तु योगजधर्मसहकृतादात्ममनस्संयोगादशेषार्थग्राहकम् । द्वितीयं च योगाभ्यासजनितधर्मदेशकालाद्युपेक्षया इन्द्रियसन्निकर्षात् परमाण्वाद्यशेषार्थग्राहकम् । ग्राहकमित्युपचारः, वस्तुतो ग्रहणमेव । अयोगिप्रत्यक्षं तु देशकालधर्माद्यनुग्रहात् षडिन्द्रिययोग्यार्थग्रहणम् । तद्यथा—चक्षुःस्पर्शनसंयोगाद् घटादिद्रव्यज्ञानम् । एताभ्यामेव संयुक्तसमवायसन्निकर्षात् सत्ताद्रव्यत्वघटत्वादिसङ्ख्यापरिमाणादिज्ञानम् । चक्षुषैव संयुक्तसमवायाद् रूपज्ञानम् । रसनेनैव रसज्ञानं, घ्राणेनैव गन्धज्ञानं, त्वचैव स्पर्शज्ञानं, मनसैव सुखादिज्ञानम् । तैरेव संयुक्तसमवेतसमवायाद् रूपत्वरसत्वगुणत्वरसत्वादिज्ञानम् । श्रोत्रसमवायाच्छब्दग्रहणं, तदाश्रितसामान्यग्रहणं समवेतसमवायादिति । एतेषु विशेषणविशेष्यभावसम्बन्धादभावग्रहणम् । तत्र भूतले घटाभावग्रहणं संयुक्तविशेषणताबलात् । रूपे रसाभावग्रहणं संयुक्तसमवेतविशेषणताबलात् । रूपत्वादिजातौ भेदाभावग्रहणं संयुक्तसमवेतसमवेतविशेषणताबलात् । ककारे गत्वाभावग्रहणं समवेतविशेषणताबलात् । कत्वे भेदा(भा)वग्रहणं समवेतसमवेतविशेषणताबलात् । इति पञ्चविधसम्बन्धसम्बन्धिविशेषणताबलादभावग्रहणम् । विशेषणतास्वरूपसम्बन्धो विशेषणविशेष्यभाव इत्यनर्थान्तरम् । समवायस्तु वैशेषिकसमयेऽतीन्द्रिय एव इत्यत्र सम्बन्धापेक्षा नास्ति । प्रत्यक्षज्ञाने करणमिन्द्रियमेव । तस्य निर्विकल्प(क)ज्ञाने जनयितव्ये षोढा सन्निकर्षोऽवान्तरव्यापारः । सविकल्पके जनयितव्ये

सन्निकर्षो निर्विकल्पकज्ञानं व्यापारः । हानादिबुद्धिषु जनयितव्यासु सन्निकर्षनिर्विकल्पसविकल्पकज्ञानान्यवान्तरव्यापारः । व्यापारवाद्धि करणम् । नहि व्यापारेण व्यापारिणो व्यवधानं भवति कुठारादेरप्यकरणत्वप्रसङ्गात् । तत्र निर्विकल्पकं पुरोवर्त्तिवस्तुमात्रग्रहणम् । सविकल्पकं तु नामजातिगुणद्रव्यविशिष्टज्ञानम् । यथा चैत्रो ब्राह्मणः पाचकः शुक्लो दण्डीति क्रमेणोदाहरणानि ॥

तत्र निर्विकल्पकमेव प्रमाणमास्थिषत सौगताः । तथाहि — वस्तुमात्रस्वरूपं स्वलक्षणं गृह्णन्निर्विकल्पकं प्रमाणं भवति । (निर्वि ? सवि)-कल्पकं तु कल्पितसामान्यादिविषयत्वादप्रमाणम् । नन्वनुगताकारविषयत्वाद् गोत्वादिकं कल्पितमिति चेदित्थं शृणु । गोत्वादिकं सर्वं सर्वत्र वर्तते, स्वव्यक्तिमात्रे । आद्ये अश्वादावपि गोत्वप्रसङ्गः । द्वितीये तु प्रत्यग्रोत्पन्नायां व्यक्तौ कथं जातिप्रतीतिः । अन्यतस्तत्रायाति वा पूर्वं तत्रासीद्वा सहोत्पद्यते वा न प्रतीयत एव वा । न प्रथमः । निरवयवस्य क्रियाभावेन तत्रागमनासम्भवात् । न द्वितीयः । पूर्वं स्वव्यक्त्यभावेन तत्रासत्त्वात् । न तृतीयः । नित्यत्वेनोत्पत्त्यसम्भवात् । न चतुर्थः । व्यक्त्युत्पत्त्यनन्तरं तत्र प्रतीयमानत्वात् । यथाहुः —

"नायाति नच तत्रासीदस्ति पश्चान्नचांशवत् ।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥"

इति । ननु जात्यनङ्गीकारेऽयं गौरयमपि गौरिति व्यवहारः कथमिति चेद्, अन्यापोहादिति गृहाण । अगोव्यावृत्तत्वं हि सकलगोव्यक्तिष्वनुगतम् । तेनानुगतव्यवहारः । तस्मात् कल्पितसामान्यादिविषयत्वात् सविकल्पकं न प्रमाणमिति बौद्धाः ॥

अत्रोच्यते—सविकल्पकानङ्गीकारे निर्विकल्पके मानाभावात् तदपि न स्यात् । अनुमानाप्रामाण्यप्रसङ्गाच्च । अनुमानस्य सप्रकारत्वेन स्वलक्षणमात्राविषयत्वात् । परम्परया तद्विषयत्वमस्ति तत्रापीति यदि, तर्हि सविकल्पकस्यापि परम्परया स्वलक्षणविषयत्वमस्त्येव । न च सामान्यं कल्पितम् ।

अनुगतप्रत्यक्षसिद्धत्वात् । न चान्योऽपोहादनुगतव्यवहारः । इतरेतराश्रयत्वात् । गोव्यवहारे सिद्धे तद्व्यतिरिक्ते अगोव्यवहारः । अगोव्यवहारे च सिद्धे तद्व्यावृत्त्या गोव्यवहार इति । अतो गोव्यवहारार्थं विधिरूपा जातिरेवाभ्युपगमनीया । सा च सर्वत्र वर्तते । स्वव्यक्त्या त्वभिव्यज्यते । प्रत्यग्रोत्पन्ने तु वस्तुनि तत्र स्थितैवाभिव्यज्यते । पूर्वन्तु व्यक्त्यभावान्न प्रतीयते । तस्माद् दूषणश्लोकोऽप्यकाण्डे ताण्डवायते । जातेरवश्याभ्युपेयत्वाद्, अतद्व्यावृत्तेरसम्भवात् । अतस्सविकल्पकमपि प्रमाणम् ॥

ननु सविकल्पकमेव प्रमाणमिति शाब्दिकाः । तथाहि— सर्वोऽपि प्रत्यक्षव्यवहारः शब्दोल्लेखं विना न प्रवर्तते । चैत्रो ब्राह्मण इत्यादिनैव व्यवहारात् । तदुक्तं —

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥"

इति । तन्न । निर्विकल्पकस्यापि प्रामाणिकत्वात् । यतः शब्दार्थयोः सम्बन्धिनोरन्यतरग्रहणे अन्यतरस्मरणमाविरस्ति । यथा पदग्रहणे अर्थग्रहणम् । तथाच निर्विकल्पकेन प्रथममर्थग्रहणाभावे संज्ञास्मरणाभावात् सविकल्पकमेव न जायेत । निर्विकल्पकेनार्थग्रहणे सम्बन्धिदर्शनात् । संस्कारोद्बोधे संज्ञास्मरणात् सविकल्पकं भवेत् । अतः कार्येण कारणानुमानम् । तदुक्तम्—

"अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥"

तस्मात् सविकल्पकं निर्विकल्पकमुभयं प्रत्यक्षफलम् । तत्करणं चेन्द्रियं प्रत्यक्षप्रमाकरणमिति वैशेषिकादयः ॥

अथ लैङ्गिकम् । लिङ्गाज्जातमनुमितिरूपं ज्ञानं लैङ्गिकम् । तत्कारणमनुमानम् । अनुमीयते येन तदनुमानं लिङ्गपरामर्शः, परामृश्यमानं वा लिङ्गं व्याप्तिस्मृतिर्वा । तैर्ह्यनुमीयते व्याप्तिबलेन । गमकं लिङ्गमिति लक्षणम् । व्याप्तिश्चाव्यभिचरितः सम्बन्धः, निरुपाधिको वा सम्बन्धः ।

व्यभिचारो नाम हेतोः साध्याभाववति वृत्तिः। तदभावोऽव्यभिचारः। स च भूयोदर्शनसहितसहचारदर्शनव्यभिचारादर्शनवता प्रत्यक्षेण मानसेन गृह्यते। यत्र साधनं तत्र साध्यमिति अन्वयेन व्याप्तिग्रहः। यत्र साध्याभावस्तत्र साधनाभाव इति व्यतिरेकेण व्याप्तिग्रहः। उपाधिश्च व॰ क्ष्यते। तदभावसहकृतेन वा प्रत्यक्षेण सतर्केण व्याप्तिर्गृह्यते। ननूपाधिः कथं निराकर्तव्यः। योग्यस्य योग्यानुपलब्ध्या निराससम्भवेऽपि अयोग्योपाधेर्निराकर्तुमशक्यत्वात्। अनुपलब्धिमात्रेण निरासे सर्वातीन्द्रियनिरासप्रसङ्गात्। ततश्च शङ्कितव्यभिचारेण व्याप्तिग्रहोपायस्यासम्भवात् कथं तद्ग्रहणमिति चेत्। मैवम्। अयोग्योपाधिः कथं शङ्कनीयः, भविष्यति कश्चिदत्रोपाधिरिति वा विशेषेण निर्दिश्यमानो वा। नाद्यः, सर्वानुमानोच्छेदप्रसङ्गात्। चार्वाकस्येयमिष्टापत्तिरितिचेत् तर्हि प्रत्यक्षमात्रवादिनस्तस्य भोजनादौ प्रवृत्त्यसम्भवाज्जीवनमेव दुर्लभं स्यात्। नहीष्टसाधनत्वं प्रत्यक्षम्। येन तदवगम्य भोजनादौ प्रवृ(त्य ? त्ति)सम्भ(वात् ? वः) किन्त्वनुमेयम्। तथा च तदनङ्गीकारे स्वव्याघात एव स्यादिति। नतु द्वितीयः। स तु योग्य एवेति तस्य योग्यानुपलब्ध्या निरासात्। यदि सविशेष उपाधिलक्षणवान्, तर्हि सोपाधिकत्वमेव हेतोरिष्टम्। किञ्चानुकूलतर्केण हेतोरुपाधिर्निरसनीयः। कार्यकारणभावादिरनुकूलस्तर्कः तद्भङ्गप्रसङ्गेऽभिहिते पुनः शङ्कैव नोदेति। अत उपाध्यभावसहकृतेन भूयोदर्शनरूपप्रत्यक्षेण व्याप्तिग्रहणमिति सिद्धम्॥

उपाधिश्च विचार्यते — व्यतिरेकधर्म उपाधिस्वरूपम्। लक्षणं तु — साध्यसमव्यापकत्वे सति साधनाव्यापकत्वम्। साध्यव्यापकत्वं च साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्। साधनसमानाधिकरणात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्। तेन नेतरेतराश्रयत्वम्। अन्यथा व्याप्तिसिद्धौ उपाधिसिद्धिः उपाधिसिद्धौ निरुपाधिकसम्बन्धरूपव्याप्तिसिद्धिरित्यन्योन्याश्रयता स्यात्। साध्येन समानाधिकरणाः साध्येन सहवृत्तयो येऽत्यन्ताभावा अव्यापका(नान्ते ? स्ते)षामप्रतियोगित्वम्। अव्यापकभावस्य सन् विप्रतियोगी न व्यापकः। व्यापकस्यात्यन्ताभावश्च साध्येन सह नास्ति, तेन सह व्यापकस्यैव वृत्तेः। साधनसमानाधिकरणस्तु यो(ग्यता ? ऽ)त्यन्ताभावः, तस्य साध्यव्यापकोऽपि प्रतियोगी भवति।

क्वचित् साधनेन सह तस्यावृत्तेः । यथा हि निषिद्धत्वमधर्मसाधनत्वं साध्यं व्याप्नोति, तेन सह सर्वत्र वृत्तेः । साधनं च हिंसात्वं न व्याप्नोति, पक्षीकृतवैधहिंसायां हिंसात्वे सत्यपि निषिद्धत्वाभावात् । समपदं तु यत्रोपाधिस्तत्र साध्यमिति प्रदर्शनार्थम् । यथा यत्र यत्र निषिद्धत्वं तत्र तत्राधर्मसाधनत्वं कलञ्जभक्षणादौ । ननूपाधेः साध्यव्यापकत्वं युक्तम् । पक्षे स्वनिवृत्त्या साध्यव्यावृत्तिहेतुत्वात् । व्याप्यत्वं च दूषणानौपाधिकत्वात् किमर्थमिति चेत् । सत्यम् । उपाधिपदप्रवृत्तिनिमित्तत्वार्थं व्याप्यत्वमप्यङ्गीकर्तव्यम् । उप समीपे स्वधर्म(मना ? मा)दधातीत्युपाधिरुच्यते । यथा जपाकुसुमं स्वसन्निहिते स्फटिकादौ लौहित्यमादधदुपाधिः । एवमनुमाने दृष्टान्ते ब्रह्महननादावधर्मसाधनत्वेन निषिद्धत्वस्ययद्व्याप्यत्वं तद्धिंसात्वे प्रतीयत इत्यसावपि निषिद्धत्वादिरुपाधिरुच्यते । व्यापकत्वं च दूषकताबीजम् । दूषकत्वं चोपाधेर्व्यभिचारोन्नायकत्वेनेत्येके । व्याप्यत्वासिद्ध्युन्नायकत्वेनेत्यपरे । सत्प्रतिपक्षोत्थापकत्वेनेत्यन्ये । व्यभिचारोन्नायकत्वं त्वेवं — पक्षे व्यापकोपाधिव्यावृत्त्या व्याप्यस्य साध्यस्य व्यावृत्तौ पक्षस्यैव विपक्षत्वेन हेतोर्व्यभिचार इति । व्याप्यत्वासिद्धिस्तु — हेतोर्व्यभिचारादेव व्याप्त्यभावात् । स(म्प्र ? त्प्र)तिपक्षता तु — वैधी हिंसा अधर्मसाधनं, हिंसात्वात्, ब्रह्महिंसावत् इत्यनुमाने वैधी हिंसा नाधर्मसाधनम् । अनिषिद्धत्वात् अग्निहोत्रवत् इत्युपाधिव्यतिरेकेण साध्यविपर्ययानुमानम् । तत्र व्यभिचारोन्नयनस्योपजीव्यत्वात् तदेव दूषणं युक्तम् । लक्षणव्यावृत्त्यं तु अभिनवसप्तपदार्थ्याम् अस्माभिः सम्यङ् निरूपितमिति नेह विपञ्च्यते ॥

तच्चानुमानं द्विविध — स्वार्थपरार्थभेदात् ।

स्वप्रतिपत्तिहेतुः स्वार्थम् । यथा स्वयमेव धूमादिलिङ्गं दृष्ट्वा स्मृतव्याप्तिकः पर्वतादौ वह्निरस्तीत्यनुमिनोति । परप्रतिपत्तिहेतुः परार्थानुमानम् । यथा शब्दादौ कृतकत्वादिना स्वयमनित्यत्वं निश्चित्य तत्र विप्रतिपन्नपरबोधनार्थं पञ्चावयववाक्यप्रयोगः । अवयवास्तु — प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । प्रतिज्ञादीनां महावाक्यैकदेशत्वादवयवशब्दवाच्यत्वम् । ततश्चावयवा इवावयवाः । तत्र साध्यसिषाधयिषया पक्षवचनं प्रतिज्ञा । पक्षश्च सन्दिग्धसाध्यधर्मा । यथा शब्दोऽनित्य इति । प्रतिज्ञायाते हेतोरा

वचनं हेतुः, कृतकत्वात् । कृतकत्वेन यतः कृतक इत्यादिरूपः । सम्यग् दृष्टान्ताभिधानम् उदाहरणम् । यथा यत् कृतकं तदनित्यं यथा घट इत्यादि । दृष्टान्तानन्तरं पक्षे व्याप्तिरव्यापकं वचनमुपनयः यथा तथायं शब्दः कृतक इति । उपनयानन्तरं सहेतुकं पुनः प्रतिज्ञावचनं निगमनं, तस्मादनित्य एवेति । निगमनं चावश्यकम् । तस्मादनित्य एवेत्युक्ते नित्यो न भवतीति प्रतीयते । अतः साध्यविपर्ययप्रतिपादकम् । प्रमाणाभावसूचकत्वात् हेतुना पक्षधर्मतामात्रदर्शनाद् व्याप्तिविशिष्टधर्मत्वप्रतिपादनाय तथा वह्निव्याप्य-धूमवानयमित्येवंरूपोपनयोऽप्यपेक्षणीयः । हेतुश्च त्रिविधः, केवलान्वयी केवलव्यतिरेकी अन्वयव्यतिरेकी चेति । तत्र पक्षव्यापकः सपक्षवृत्तिरविद्य-मानविपक्षः केवलान्वयी । यथा शब्दोऽभिधेयः प्रमेयत्वाद् घटवत् । अन-भिधेयस्य कस्यचिदभावादविद्यमानविपक्षः शब्दव्यतिरिक्तः सर्वोऽपि सपक्ष एव । शब्दः सर्वोऽपि प्रमेय एवेति पक्षव्यापकः । अयं च पक्षव्यापकः सपक्षैकदेशवृत्तिरपि कश्चित् । अदृष्टादिकं कस्यचित् प्रत्यक्षं मीमांस-कानामप्रत्यक्षत्वादस्मत्सुखादिवदिति मीमांसकानां प्रत्यक्षातिरिक्तं प्रमाण-गम्यत्वं घटादौ सपक्षे न वर्तते । वर्तते(वा ? चा)स्मत्सुखादाविति सपक्षैकदेशवृत्तिः । अप्रत्यक्षस्य कस्याप्यभावादविद्यमानविपक्षत्वम् । पक्षव्यापकोऽविद्यमानसपक्षो विपक्षाद् व्यावृत्तः केवलव्यतिरेकी । यथा— सर्वज्ञप्रणीता वेदाः, वेदत्वात्, (यन्न ? यो न) सर्वज्ञप्रणीतः स न वेदः यथा कालिदासादिवाक्यम् । नचाप्रसिद्धविशेषणः पक्षः, सर्वादिपदार्थानां प्रसिद्धत्वात् । समुदायार्थोऽप्रसिद्ध इति चेत् पदार्थान्वयरूपत्वात् समु-दायार्थस्य, अन्यथा पर्वतोऽग्निमानित्यत्रापि पर्वतीयाग्निमत्त्वस्य क्वाप्यप्रसिद्धे-रप्रसिद्धविशेषणः पक्षः स्यात् । किञ्च यत्र विपक्षे बाधकस्तर्को नास्ति तत्राप्रसिद्धविशेषणता दोषः स्यात् । यथा शशविषाणोल्लिखिता भूः, भूत्वात्, व्यतिरेके गगनवदित्यादौ । अत्र सर्वज्ञप्रणीतत्वाभावे अस्मदादिभिर्वेदा-र्थापरिज्ञानात् तत्प्रणयनासम्भवात् तदर्थानुष्ठानस्यासम्भवात् पारलौकिक-व्यवहारविप्लवप्रसङ्गो बाधकस्तर्कः । पक्षव्यापकःसपक्षवृत्तिर्विपक्षाद् व्यावृत्तो-ऽन्वयव्यतिरेकी । अनित्यः शब्दः कार्यत्वात्, यत् कार्यं तदनित्यम् । यथा घट इति सपक्षव्यापकः । ननु प्रागभावोऽप्यनित्यत्वात् सपक्षः, तत्र हेतोरभा-वात् कथं सपक्षव्यापकत्वमिति चेन्न । उभयावधिमत्त्वस्यानित्यत्वात्, प्राग-

भावस्योत्तरावधिसम्भवेऽपि अनादित्वात् । भूत्वा अभावित्वं वा अनित्यत्वं, प्रागभावस्य चाभूत्वा भावित्वान्नानित्यत्वम् । विनाशित्वं वा अनित्यत्वं, प्रागभावस्य भावोत्पादकत्वान्न विनाशः, भावे चोत्पन्ने उपचाराद्विनाशव्यवहारः, स्वरूपादर्शनं चोपचारे हेतुः । नच कार्यत्वं ध्वंसे अनैकान्तम्, अभूत्वा भावित्वस्य कार्यत्वाद् ध्वंसस्य च भूत्वा भावित्वात् । कारणसमवेतत्वं वा कार्यं, ध्वंसे तदभावात् । अतः सपक्षव्यापको न व्यभिचारी । अनित्यः शब्दः क्षणिकविशेषगुणत्वात्, सुखादिवदिति सपक्षैकदेशवृत्तिः । क्षणिकत्वमाशुतरविनाशित्वं, न क्षणमात्रावस्थायित्वम् । अतो नासिद्धिः । सपक्षे रूपादावभावादेकदेशवृत्तित्वम् । अयं च पञ्चभी रूपैः सम्पन्न एव साध्यस्य साधकः । तानि च रूपाणि — पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद्व्यावृत्तिः, अबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति पञ्च । सिषाधयिषितसाध्यधर्मा पक्षः । तत्र हेतोर्व्याप्यवृत्तित्वं पक्षधर्मत्वम् । निश्चितसाध्यधर्मा सपक्षः । तत्र सर्वत्रैकदेशे वा वर्तमानत्वं हेतोः सपक्षवृत्तित्वम् । साध्यत्वात्यन्ताभाववान् विपक्षः । ततः सर्वस्मा(द्वा ? द्व्या)वर्तनं हेतोर्विपक्षाद्व्यावृत्तिः । बलवत्प्रमाणविरोधो बाधः तद्वान् बाधितः । एवंभूतो विषयः साध्यं पक्षे न विद्यते यस्य हेतोः सोऽबाधितविषयः । तस्य भावस्तत्त्वम् । असत्प्रतिपक्षः साध्याभावसाधको यस्य तस्य भावस्तत्त्वम् । केवलव्यतिरेकी तु चतूरूपः, तस्य सपक्षाभावेन तद्वृत्तित्वरूपाभावात् । केवलान्वय्यपि चतूरूपः तस्य विप(क्ष ? क्षा)भावेन ततो व्यावृत्तिरूपाभावात् । एवं सद्धेतवः त्रिप्रकाराः । असद्धेतवस्तु हेत्वाभासाः । ते चानेकप्रकाराः । तेषामाभासत्वं रूपान्यतमवैकल्यात् । यद्यप्यनेके हेत्वाभासाः, तथापि वर्गभेदेन पञ्चधा भवन्ति । तद्यथा — असिद्धो विरुद्धोऽनैकान्तिकः कालात्ययापदिष्टः प्रकरणसमश्चेति । तत्र रूपवैकल्यं कथमितिचेद् एवं पक्षधर्मताभावे चासिद्धः, सपक्षवृत्तिविपक्षाद्व्यावृत्त्योरभावे विरुद्धः, तस्य सपक्षविपक्षयोरेव वर्तमानत्वात्, विपक्षाद्व्यावृत्त्यभावेऽनैकान्तिकः । पक्षसपक्षवृत्तित्वाभावे असाधारणः । अबाधितविषयत्वाभावे कालात्ययापदिष्टः । असत्प्रतिपक्षत्वाभावे प्रकरणसमः । अनुमानस्य द्वे अङ्गे व्याप्तिः पक्षधर्मता च । तदन्यतराभावेन पञ्चाभासा भवन्ति । तत्र व्याप्त्यभावेन विरुद्धव्यभिचारौ । पक्षधर्मताभावाद् असिद्धिः । उभयोरभावाद् बाधः । प्रकरणसमो व्याप्त्यभावादेव । उभयोर्हेत्वोरेकत्र विरुद्धयोर्व्याप्त्यभा-

वात् । तत्रानिश्चितपक्षवृत्तिरसिद्धः । नास्तीति निश्चिता वा पक्षे सन्दिग्धा वा वृत्तिर्यस्येति विग्रहः । व्याप्तस्य हेतोः पक्षधर्मताप्रतीतिः सिद्धिः । तदभावोऽसिद्धिः । सा(य ? च)व्याप्तिपक्षतद्धर्माणां तज्ज्ञानानाम् अभावेन चतुर्धा इत्युदयनमतम् । तथा च व्याप्त्यभावाद् व्याप्यत्वासिद्धिः । पक्षाभावादाश्रयासिद्धिः । पक्षधर्मताभावात् स्वरूपासिद्धिः । एतेषामन्यतमज्ञानाभावादज्ञानासिद्धिः । व्याप्यत्वासिद्धौ यथा — स श्यामो मित्रातनयत्वात् परिदृश्यमानमित्रातनयस्तोमवदिति । तत्र शाकाद्याहारपरिणाम उपाधि, तत्र वैद्यशास्त्रान्नरश्यामत्वे शाकाद्याहारपरिणामः कारणत्वेन गृहीत इति साध्यव्यापकः । साधनाव्यापकत्वञ्च सन्दिह्यते । पक्षीकृतमित्रातनये हेतुर्निश्चितः । तत्र शाकाद्यन्नपरिणामेन भवितव्यमत्र न प्रमाणमस्ति । समीचीनान्नपरिणामस्यापि गौरत्वहेतोः सम्भवात् । अतः साधनाव्यापकत्वसन्देहाच्छङ्कितोपाधिः । निषिद्धत्वञ्च निश्चितोपाधिः । तस्याधर्मसाधनत्वसाध्यव्यापकत्वस्य निश्चयाद् वैधीहिंसायां साधनाव्यापकत्वनिश्चयाच्च तत्र निषिद्धत्वस्याभावाद् रागतः प्राप्ता शत्रुहिंसा निषिध्यते । नतु विधितः प्राप्ता अग्नीषोमीयहिंसा । 'न हिंस्यादि'ति सामान्यतो निषिद्धस्य हिंसात्वस्य 'अग्नीषोमीयं पशुमालभेते'ति विशेषविधानबाधितत्वाद् रागतः प्राप्तैव हिंसा निषिध्यते, न तु विधितः प्राप्ता । अन्यथा तद्वैयर्थ्यापातात् । अतो निषिद्धत्वं निश्चितोपाधिः । अयं च हेतुः सोपाधिकत्वाद्व्याप्यत्वासिद्धः । अपरस्तु व्याप्तिग्राहकप्रमाणाभावाद् व्याप्यत्वासिद्धः । यथा सर्वं क्षणिकं सत्त्वाद्, यथा वा सर्वमनित्यं प्रमेयत्वादिति । अत्र दृष्टान्ताभावाद्व्याप्तिग्राहकप्रमाणाभावः ततश्चासिद्धः । आश्रयासिद्धो यथा — खपुष्पं गन्धवत् पुष्पत्वात् चम्पकपुष्पवद् इति । स्वरूपासिद्धो यथा — अनित्यः शब्दः चाक्षुषत्वाद् घटवद् इति । सिद्धसाधनमप्याश्रयासिद्धः । सन्दिग्धसाध्यवतो हि पक्षत्वम् । साध्यस्य निश्चितत्वे सन्देहाभावादाश्रयत्वमेव नास्ति । अतः पक्षसद्भावेऽपि सन्दिग्धसाध्याभावात् पक्षत्वमेव नास्तीति आश्रयासिद्ध एव । यथा अनित्यः शब्दः कृतकत्वादिति शाक्यं प्रति प्रयोगः, यथा वा घटोऽनित्यः कार्यत्वादिति मीमांसकादीन् प्रति प्रयोगे प्रतिवादिनोऽपि मते साध्यसिद्धत्वात् सिद्धसाधनम् । अत्र साध्यस्य सिद्धत्वात् सन्देहा-

भावेन घटादेः पक्षत्वमेव नास्ति । अतो गगनारविन्दादौ विशेष्याभावा-दाश्रयासिद्धतेवात्र विशेषणाभावादाश्रयासिद्धता । तदुक्तम् —

"आश्रयासिद्धता हेतोः सिद्धधर्मस्य साधने ।
पक्षो हि संश्रयस्तस्य स च साध्यान्वितो यतः ॥"

इति । अज्ञानासिद्धो यथा — सर्वं क्षणिकं सत्त्वादिति व्याप्त्यज्ञानाद्-सिद्धः । अत्र व्याप्तिग्राहकप्रमाणाभावाद्व्याप्तिज्ञानाभावः । इदानीमदृष्टं कार्यजनकं भोजकादृष्टत्वात् कार्यानुमितभोजकादृष्टवदित्याश्रयाज्ञाना-सिद्धः । देवदत्तो बहुधनो भविष्यति तद्धेतुभूतादृष्टाश्रयत्वादिति स्वरूप-ज्ञानासिद्धः । भागासिद्धव्यधिकरणासिद्धव्यर्थविशेष्यासिद्धादयोऽसिद्धभेदाः स्वरूपासिद्धावेवान्तर्भूताः । यथा — अनित्यः शब्दः अपदात्मकत्वात्, सैव प्रतिज्ञा घटस्य, कृतकत्वात् । सैव प्रतिज्ञा कृतकत्वे सति गुणत्वाद्, गुणत्वे सति कृतकत्वादित्यादय ऊह्याः । एते चासिद्धभेदाः वादिप्रतिवादि-नोरन्यतरस्याप्रसिद्धत्वेऽन्यतरासिद्धाः । उभयोरप्रसिद्धत्वे उभयासिद्धाः ॥

इत्यसिद्धः ॥

---

साध्यविपर्ययव्याप्तो हेतुर्विरुद्धः, पक्षविपक्षयोरेव वर्तमानो हेतुर्वा । स च साध्येन विरुध्यते तदभावव्याप्तत्वादिति विरुद्धः । यथा — नित्यः शब्दः कृतकत्वादिति । नन्वयं व्याप्यत्वासिद्धः कस्मान्न भवति नित्यत्वेन सह कृत(क)त्वव्याप्त्यभावात् । साधनविकलो वा कुतो न भवति, गगने दृष्टान्ते हेत्वभावात् । सत्प्रतिपक्षत्वं वा किमिति न भवति, कृतकत्वेनानि-त्यत्वसाधनादिति चेत् । मैवं वोचः । विरोधस्योपजीव्यत्वेन तस्यैव दोषत्वात्, नान्येषाम्, उपजीवकत्वात्, 'उपजीव्योपजीवकयोरुपजीव्यं बलवदि'ति न्यायात् । पुरः स्फूर्तिकत्वेनाप्यस्यैव दोषत्वात् ॥

सव्यभिचारोऽनेकान्तः । अन्तशब्दो निश्चयवाची । एकेन साध्येन सह अन्तो निश्चयो न विद्यते यस्यासावनेकान्तः । व्यभिचारो द्विधा— अन्वयेन व्यतिरेकेण चेति । अनेकान्तोऽपि द्वेधा साधारणोऽसाधारणश्चेति । आद्यः पक्षत्रयवृत्तिः । तस्य चान्वयेन व्यभिचारः । स्वदेशातिलङ्घनं हि व्यभिचारः । हेतोश्च देशः पक्षः सर्वः । सपक्षस्तु सर्वः कतिपयो वा । तद्विहाय

विपक्षेऽपि वर्तनं व्यभिचारः । शब्दोऽनित्यः प्रमेयत्वाद् घटवत् । पक्षमात्रवृत्तिरसाधारणः । तस्य च व्यतिरेकेण व्यभिचारः । हेतोर्विपक्षाद्व्यावृत्तिः व्यतिरेकस्य युक्ता । तस्य सपक्षादपि व्यावृत्तिर्व्यभिचारः स्वस्थानातिलङ्घनात् । भूर्नित्या गन्धवत्त्वाद् गगनवत् । ननु तर्हि केवलव्यतिरेक्यपि असाधारणः स्यात्, तस्यापि पक्षमात्रवृत्तित्वादिति चेत्, सत्यम् । तत्र सपक्षस्यैवाभावात् । सति सपक्षे हि तत्रावर्तनं दोषः । अत एवोक्तं वरदराजेन—

'सपक्षे सति चाभासः स्यादसाधारणस्त्वसौ ।'

इति ॥

बलीयसा प्रमाणेन बाधितसाध्यो हेतुः कालात्ययापदिष्टः । पक्षे हि सन्दिग्धसाध्ये सति हेतोः प्रयोगस्य कालः । स च पक्षो यदा प्रत्यक्षादिना निश्चितसाध्याभाववान् तदा कालात्ययः तस्मिन्नपदिष्ट उक्तः । दुर्बलेन च बाधो न सम्भवति इति बलीयसेत्युक्तम् । तत्र प्रत्यक्षबाधितो यथा—अनुष्णः कृष्णवर्त्मा द्रव्यत्वाज्जलवदिति । अनुमानबाधितो यथा—अनित्याः परमाणवः मूर्तत्वाद् घटवदिति । अत्रानित्यत्वानुमानेन स्वधर्मिसिद्धये परमाणवोऽनुमानसिद्धा अपेक्षणीयाः । अन्यथा आश्रयासिद्धिप्रसङ्गात् । तथाच परमाणुसाधकं बलवद् धर्मिसाधकत्वात् । परमाणुसाधकं चानुमानं तन्नित्यत्वेनैव साधयति । अन्यथानवस्थाप्रसङ्गात् । अतो धर्मिग्राहकानुमानेन बाधः । परमाणु(र ?)साधकं चाधस्तादुदितम् आद्यावयवि स्वन्यूनपरिमाणावयवारब्धं कार्यद्रव्यत्वादित्यादिना । आगमस्यानुमान एवान्तर्भावात् तद्बाधो न पृथङ् निरूपणीयः । तथापि शिष्यशिक्षार्थमुच्यते—यागादयो न स्वर्गसाधनं क्रियात्वात्, मर्दनक्रियावदिति । अत्र 'स्वर्गकामो यजेते'त्यागमविरुद्धः । ननु यथा सिद्धसाधनमाश्रयासिद्धः अपक्ष(य ?)वर्तमानत्वात् तथा (व्या ? बा)धितोऽप्यपक्षवर्तित्वादाश्रयासिद्धो भवतु । अपक्षं चैकत्र सन्देहाभावादपरत्र बाधितसाध्यत्वादित्येतावानेव विशेष इति चेत् । सत्यम् । तथापि द्रव्यत्वस्यानुष्णत्वेन व्याप्तिग्रहावस्थायामनुष्णत्वप्रतियोगितया उष्णत्वं क्वापि ग्राह्यम् । तच्चोष्णत्वं वह्नावेव ग्राह्यम् । ततश्च व्याप्तिग्रहसमय एव बाधितविषये पश्चात् पक्षत्वातिपातः । तथाचोपजीव्यत्वाद् बाधक एव दोषः, नाश्रयासिद्धता । नवा पक्षस्यैव

विपक्षत्वाद्व्यभिचारः । तथा च बाधेनोपाध्युन्नयनं वा व्यभिचारोन्नयनं वा भवति । ततो व्याप्यत्वाभावः । सिद्धसाधने तु व्याप्तौ सिद्धायामेव पक्षधर्मत्वस्यैवातिपात इति तस्याश्रयासिद्धता बाधितविषयः सिद्धसाधनं च पक्षाभास इति केचन वदन्ति । तदपि न । उभयोरप्युक्तप्रकारेण दोषत्वसम्भवात् ॥

प्रतिसाधनप्रतिरुद्धः प्रकरणसमः । प्रतिरोधो नाम हेतोरर्थनिश्चयप्रतिबन्धः । प्रकरणयोः प्रकृतयोः साध्यताभावयोः समः रूपत्रयत्वेन प्रतिसाधनस्य समः प्रकरणसमः । सत्प्रतिपक्षो हेतुः प्रकरणसम इत्युदयनः । ननु प्रतिरोधः किं हीनबलेन, समबलेनाधिकबलेन वा । यत्रेधापि न सम्भवति विहीनस्य बाध्यत्वत्वेन बाधकत्वायोगात् , नापि समेन प्रतिरोधः, विरुद्धयोः प्रमाणत्वाभावात् । तथात्वे वा वस्तुनो द्वैरूप्यापातात् । नाधिकबलेन कालातीतत्वापत्तेः । सत्यम् । वस्तुतस्तुल्यबलत्वाभावेऽपि अगृह्यमाणविशेषदशायामाभिमानिकतुल्यबलत्वसम्भवात् । अत एव प्रत्यक्षेणापि तुल्यबलत्वाभिमाने प्रतिरोधः । यथा शङ्खोऽयं शुक्लः शङ्खत्वात्, इतरशङ्खवदित्यत्र पीतशङ्खो मया गृह्यत इति प्रत्यक्षेण प्रतिरोधः । अनुमानप्रतिरोधस्तु शब्दो नित्यः कार्यत्वाद् घटवत्, नित्यः शब्दः श्रावणत्वात् शब्दत्ववत् इति । केचिदिमं विरुद्धाव्यभिचारीति वदन्ति । यथाहुर्भट्टाचार्याः ॥

''तत्राप्रत्यक्षता वायोररूपित्वेन साध्यते ।
स्पर्शात् प्रत्यक्षता चासौ विरुद्धाव्यभिचारिता ॥''

इति । विरुद्धयोर्हेत्वोरव्यभिचारिता एकस्मिन् साध्ये रूपत्रयवत्वमुभयोरिति यावत् ।

नन्वप्रयोजकानध्यवसितौ हेत्वाभासौ स्तः, तथा च कथं पञ्चैव हेत्वाभासाः इति चेन्न । शङ्कितव्यभिचारस्याप्रयोजकत्वात् । शङ्का त्वनुकूलतर्काभावेन भवति । अनुकूलतर्केण च सा निवर्तते । तथाचान्यथासिद्धिरप्रयोजक उपाधिमानित्यनर्थान्तरम् । अथवा व्यभिचार एवान्तर्भावः, तच्छङ्काहेतुत्वात् । तदुक्तम् —

''समासमाविनाभावावेकत्र स्तो यदा तदा ।
(य ? स)मेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजकः ॥''

इति । अयमर्थः — समः अविनाभावः सम्बन्धो यस्य स समव्याप्तिक इत्यर्थः । असमः अविनाभावो यस्य सोऽसमाविनाभावः समव्याप्तिरहित इत्यर्थः । तौ समासमाविनाभावौ धर्मौ एकत्र साध्ये स्तो यदा, तदा यदि तयोर्धर्मयोर्मध्ये हीनोऽसमाविनाभावः समेन समाविनाभावेन नो व्याप्तः व्याप्तिरहितः तर्हि अप्रयोजकः । यथा निषिद्धत्वं समव्याप्तं तस्य साध्यपुरस्सरा उपाधिपुरस्सरा च व्याप्तिरस्ति हिंसात्वं त्वसमव्याप्तम् । यत्र हिंसात्वं तत्राधर्मसाधनत्वम् , इत्यस्ति व्याप्तिः व्यर्थहिंसायां दर्शनात् । यत्राधर्मसाधनत्वं तत्र हिंसात्वमिति तु नास्ति अगम्यागमनादेस्तद्दर्शनात् । तयोर्मध्ये निषिद्धत्वं हिंसात्वं न व्याप्नोति, पक्षे हिंसात्ववति निषिद्धत्वाभावात् । अतो हिंसात्वहेतुरप्रयोजकः । केचित्तु परप्रयुक्तव्याप्त्युपजीवी अप्रयोजक इति वदन्ति । यथाहुः —

"व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः ।
अस्मिन् सत्यमुना भाव्यमिति शक्त्या निरूप्यते ॥
अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि नैवेष्टा व्यापकाः (शा ? सा)वधारणाः ॥"

इति ॥

अनध्यवसितस्त्वसाधारण एव, साध्यासाधकः पक्ष एव वर्तमानो हेतुरनध्यवसितः । असाधारणोऽपि तादृश एवेति ॥

उदाहरणाभासोऽपि न पृथक् । हेत्वाभासेष्वेवान्तर्भावात् । तथाहि — साध्यविकलो दृष्टान्तः साधारणो विरुद्धो वा भवेत् । साध्यविकलो हि दृष्टाविपक्ष एव स्यात् । तत्र च सपक्षान्तरे वर्तमानो हेतुः पक्षत्रयवृत्तित्वात् साधारणोऽनेकान्तो भवेत् । तथा शब्दो नित्यः प्रत्यक्षत्वात् सामान्यवदित्युक्ते सामान्यदृष्टान्तरूपे विपक्षे घटादौ सपक्षे शब्दे च पक्षे वर्तमानः प्रत्यक्षत्वादिति हेतुः साधारणोऽनैकान्तः, असत्यां तु सपक्षवृत्तौ विरुद्धो भवति । पक्षविपक्षयोरेव वर्तमानत्वात् । यथा अनित्यः शब्दः श्रावणत्वात् शब्दत्ववदिति । अत्र विपक्षे शब्दत्वे पक्षे च शब्दे वर्तमानत्वाद्विरुद्धः । दृष्टान्तो यदा साधनविकलः तदा सपक्षादपि हेतोर्व्यावृत्तौ असाधारणानेकान्तो भवति यथा नित्यः शब्दः आकाशविशेषगुणत्वाद्

आत्मवद् इति । अयं हेतुः पक्षमात्रवृत्तित्वादसाधारणः, निर्दिष्टसपक्षे अवर्तमानत्वात् साधनविकलः । ननु नित्यः शब्दः अमूर्तत्वात् परमाणुवदिति साधनविकलः । नचासाधारणः, गगनादौ सपक्षे वर्तमानत्वात् । सकलसपक्षाद् व्यावृत्तो ह्यसाधारणः । अतः कथं हेत्वाभासः साधनविकल इति चेत्, सत्यम् । तथाप्यनुपदर्शितव्याप्तिकत्वाद्धेत्वाभास एव भवति व्याप्यत्वासिद्धरूपः । तथा दृष्टान्तस्योभयविकलत्वे आश्रयहीनत्वे च असिद्धव्याप्तिको हेतुः स्यात् । यथा अनित्यः शब्दः प्रत्यक्षत्वाद्, आकाशवत् तत्कुसुमवदिति । तत्र व्याप्यत्वासिद्धिरेव वैधर्म्योदाहरणे च साध्याव्यावृत्तः साधनाव्यावृत्तः उभयाव्यावृत्तः आश्रयहीनश्चेति चत्वार आभासाः । तत्र अनित्यं मनः मूर्तत्वात् । यद्यदनित्यं भवति तन्मूर्त्तमपि न भवति यथा कर्मेति साध्याव्यावृत्तः । यथा परमाणुरिति साधनाव्यावृत्तः । साधनस्य परमाणौ वर्तमानत्वात् । यथा घट इत्युभयाव्यावृत्तः, खपुष्पमित्याश्रयहीनः । एतेष्वपि व्याप्त्यप्रदर्शनानि व्याप्यत्वासिद्धिरेवेति ॥

संस्कारासाधारणकारणिका स्मृतिः सा विद्याभेदत्वाद् यथार्था वैशेषिकसमये । नन्वनुभवगृहीत .... ... .... स्मृतिः । सा चानुभवयाथार्थ्ये यथार्था, तदयाथार्थ्ये त्वयथार्था । किञ्च विचार्यमाणे स्मृतेर्याथार्थ्यमपि नास्ति । नहि .... .... .... ता गृहान्तर्गता बहिःस्थिता वेति स्मर्यते । तदा स्मर्यमाणोऽर्थस्तादृशो भवति । स्मरणसमये सा मृता वान्यत्र गता वा भवति पूर्वावस्थायां निवृत्तत्वात् । न च निवृत्तावस्थामेवार्थस्मृतिरालम्बते, अत एव ततोल्लेख इति वाच्यम् । तथानुभवात् । अन्यथा अननुभूतेऽपि स्मृतिप्रसङ्गात् । नन्वनुभवसमानविषयत्वात् स्मृतेरनुभवार्थत्वे कथं स्मृतिरयथार्थेति चेन्मैवम् । अनुभवकाले अर्थतथाभावात्, स्मृतिकाले तद्विपर्ययात्, वर्तमानत्वेन हि गृहीतोऽर्थः स्मृतावतीतत्वेन भासते । नहि पूर्वं तदवस्थ इत्युत्तरत्रापि तदवस्थो भवत्यर्थः । तदा पाकरक्तेऽपि घटादौ श्यामताप्रत्ययो यथार्थः स्यात् । तेन यथार्थानुभवजनितत्वेन स्मृतेरपि यथार्थत्वव्यपदेश इति । स्मृतिरयथार्थैवेति चेन्न । स्मृते हि यथानुभवगृहीतविषयः स चानुभवयाथार्थ्ये अयाथार्थ्यै स्मृतौ भासत एव । अतीतत्वाकारो यद्यपि न गृहीतः, तथापि स्मृतिस्वाभाव्यात्तथा भास इति स्मृतिर्यथार्थैवेति । ननु स्मृतिर्यथार्थत्वात् प्रमैवेति चेन्न । स्मृतिकरणस्य महर्षिभिः

कणादगौतमजैमिनिप्रभृतिभिः प्रमाणत्वेनापरिगणनात् । उक्तेष्वन्तर्भावादपरिगणना इति चेन्मैवम् । नहि प्रत्यक्षेऽन्तर्भावः, असाक्षात्कारिफलत्वात् । नाप्यनुमाने संस्कारस्याज्ञातकरणत्वात् । ज्ञातकरणं ह्यनुमानम् । तस्मादात्ममनस्संयोगजक्षणिकगुणत्वादज्ञातकरणजन्यत्वाच्च न च परोक्षासाक्षात्कारत्वरूपत्वाभावाच्च न प्रत्यक्षत्वानाधारे स्मृतिः पृथगेव ॥

आर्षम् ऋषिप्रभावजन्यं ज्ञानम् । तत् पृथक् प्रमाणम् । न योगिप्रत्यक्षान्तर्भूतं योगजधर्मातिरिक्ततपोबलजन्यत्वात् । तावानेव विशेष इति चेत्, सत्यम् । ज्ञाताज्ञातकरणजन्यत्वमात्रेण विशेषणप्रत्यक्षानुमानादेरपि विशेषो न स्यात् । ऋषीणां तु तपःप्रभावेन नातीन्द्रियं सर्वं प्रत्यक्षं भवति । तथा च पुराणे श्रूयते — "पराशरादयो भाविनमर्थं दृष्ट्वा मैत्रेयादिभ्य उपदिदिशु"रिति ॥

ननु कथं प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणत्वं विद्यायाः, आगमोपमानार्थापत्तिसम्भवैतिह्यचेष्टाभावानामन्येषामपि सम्भवादिति चेन्मैवम् । तेषां प्रत्यक्षानुमानयोरेवान्तर्भावात् । तथाहि — आगमस्तावत् पदपक्षकार्थपक्षकानुमानद्वयरूपः । तथाहि - प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्द आगमः प्रमाणम् । प्रयोगस्य गामानयेत्यादिवाक्यप्रयोगस्य हेतुभूतं यदर्थतत्त्वज्ञानं वक्तृगतं तज्जन्यः शब्दः प्रमाणमित्यर्थः । भ्रान्तप्रकारवाक्ययोरर्थतत्त्वज्ञानजन्यत्वाभावान्न प्रमाणम् । यत्किञ्चिदर्थज्ञानवता पुरुषेण जन्ये वाक्ये तस्य ज्ञानस्य प्रयोगहेतुभूतत्वाभावान्नातिव्याप्तिः । प्रयुज्यमानवाक्यार्थं बुद्ध्वा हि प्रयुज्यते, नतु यत्किञ्चिदर्थं बुद्ध्वा । तथा चाप्तोक्तमाकाङ्क्षायोग्यता(दि)मत् पदकदम्बकं वाक्यमित्यर्थः । ननु शब्दो न प्रमाणम्, यस्य लक्षणमन्तर्भावो वा उच्येत, यतः करणविशेषः प्रमाणम्, करणं च तद्, यस्मिन् सति क्रियोत्पद्यत एव नहि शब्दे सति प्रमोत्पद्यत एवेति चेन्न । आकाङ्क्षादिमतः पदा(न्त ? र्थ)स्मरणावान्तरव्यापारवतः प्रमाणत्वात् । तथाभूतात् प्रमोत्पद्यत एव । अतथाभूतत्वे च फलाजनकत्वस्य करणान्तरसाधारणत्वात् । प्रमाणत्वाच्चानुमानेऽन्तर्भावः । प्रयोगश्च — गामानय शुक्लां दण्डेनेत्यादिपदानि वैदिकपदानि वा तात्पर्यविषयस्मारितार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमत्पदकदम्बकत्वात्, घटमानयेत्यादिपदवत् ।

अयं श्रोता अनेन वाक्येनेममर्थं बुध्यतामिति वक्तुरिच्छा तात्पर्यं तद्विषयाश्च ते पदस्मारिता ये पदार्थाः तेषां यत् संसर्गज्ञानं वक्तुः तत्पूर्वकाणि तज्जन्यानि । संसर्गस्य बहुप्रकारत्वादनभिमतसंसर्गेणार्थान्तरता मा भूदिति तात्पर्यविषयेति विशेषणम् । अनभिमतसंसर्गस्य तात्पर्याविषयत्वात् । अन्यथा शब्दादप्यभिमतबोधो न स्यात् । ननु संसर्गज्ञानपूर्वत्वसिद्धावपि संसर्गः कथं सिध्येदिति चेत्, ज्ञानव्यावर्तक(त)येति ब्रूमः । ज्ञानज्ञानस्य तद्विषयविषयकत्वात् । अनुमितिविषयं हि वक्तृज्ञानज्ञानम् । तद्वक्तृज्ञानविषयत्वं संसर्गमपि विषयीकरोति । निर्विषयस्य ज्ञानस्य ग्रहीतुमशक्यत्वात् । तथापि गवानयनमिति विशेषः कथं सिध्येदिति चेत्, सत्यम् । संसर्गमात्रस्य ज्ञानव्यावर्तकतया सिद्धौ पक्षीकृतसम्बन्धिन एव विशेषत्वात् पक्षधर्मताबलेन गवानयनविशेषसिद्धेः । अतो वक्तृज्ञानानुमानात् पदपक्षकाद् गवानयनादिसंसर्गसिद्धौ पुरुषस्येष्टसाधनताज्ञानात् प्रवृत्तिः । यद्वा ज्योतिष्टोमेन स्वर्गकामो यजेत, गामानय शुक्लां दण्डेनेति वाक्यश्रवणसमनन्तरं समयबलात् पदार्थमात्रं परिज्ञाय, एते पदार्था मिथः संसर्गवन्तः आकाङ्क्षादिमत्पदकदम्बकस्मारितत्वाद् घटादिपदार्थवदित्यर्थपक्षकानुमानम् । पक्षधर्मताबलात् संसर्गविशेषसिद्धिः । अत्र संसर्गोऽनुमितिविषयतयैव सिद्ध्यति । अतोऽर्थपक्षकानुमानमेव ज्यायः । नन्वाकाङ्क्षायोग्यतासन्निधयोऽनुमानद्वयेऽपि विशेषणानि तत्राकाङ्क्षा प्रतिपत्तुः जिज्ञासां प्रति योग्यता । गामित्युक्ते श्रोतरि जिज्ञासा भवति आनयामि बध्नामि वेति । आनयेत्युक्ते गां घटं वेति जिज्ञासा भवति । बाधकप्रमाविरहो योग्यता । विपरीतप्रमा तु बाधः पदानामर्थानां वा निरन्तरताज्ञानं सन्निहिते स्वरूपसन्त एव शाब्दानुभवं प्रति हेतवः, नतु ज्ञाताः गौरवात्, तद्बोधाभावेऽप्यन्वय बोधदर्शनात् । अन्वयबोधे विलम्बाभावाच्च लिङ्गविशेषणत्वे ज्ञातत्वं वाच्यम् । अतः कथमाकाङ्क्षादिहेतुविशेषणमितिचेन्मैवं वादीः । आकाङ्क्षादिरहितेऽपि तदभिमानात् संसर्गप्रत्ययोत्पत्तेः ज्ञाता एवाकाङ्क्षादयो हेतवः नतु स्वरूपसन्त एव । अन्यथा शब्दाभासोच्छेदप्रसङ्गः । किञ्च अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राजा पुरुषमाकाङ्क्षति पुरुषं वेति सन्देहे पुरुषमेवेति । विपर्यये च वाक्यार्थबोधाप्रतिबन्धाच्च । एतच्च ज्ञाताया उपयोगे घटते न स्वरूपसत्या । स्वरूपसत्या उपयोगे संशयविपर्ययौ न स्त एव, यथास्थितान्वय-

सम्भवात् । ननु बाधाविरहस्य योग्यत्वात् तज्ज्ञानं न सम्भवति सर्वबाधविरहस्य ज्ञातुमशक्यत्वात्, स्वबाधविरहस्यान्यबाधेऽपि सम्भवेन व्यभिचारात्, अतः कथं तन्निश्चयः इति चेन्न । बाधविरहस्य संशयनिश्चयसाधारणज्ञानमात्रस्यैव हेतुत्वात् क्वचित् स्वपरबाधविरहोऽपि निश्चीयत एव । यथेह भूतले घटो नास्तीत्यत्र स्वयोग्यानुपलब्ध्या घटाभावनिश्चयेनान्यस्यापि घटप्रमाविरहो निश्चीयते । सन्निधिश्च पदानां निरन्तरोत्पन्नत्वमात्रं तज्ज्ञानञ्चान्वयबोधहेतुः, अत आकाङ्क्षादीनि ज्ञात्वा तानि हेतुरिति लिङ्गविशेषणानीति न कश्चिद्दोष इति शब्दान्तर्भावः ॥

उपमानमपि किञ्चित् साक्षादनुमानेऽन्तर्भवति किञ्चिच्च शब्दद्वारान्तर्भवति । तत्र वनं गतस्य गवयपिण्डमनुभवतः पुरुषस्य गोसदृशोऽयमिति ज्ञानानन्तरमेतत्सदृशः स इति मतिर्भवति । तत्र पूर्वमुपमानकारणं उत्तरं तु फलमिति भाट्टा वदन्ति । एतच्च स्मरणमेव । अस्मरणत्वेऽपि वा अनुमानम् । गौरेतत्सदृशः एतन्निष्ठसादृश्यप्रतियोगित्वात् यो यन्निष्ठसादृश्यप्रतियोगी स तत्सदृशः । यथा -- यमो यमान्तरेण हस्तो वा हस्तान्तरेणेति । यत्तु नैयायिका वदन्ति—यथा गौ रे ? रि)व गवय इति श्रुतातिदेशवाक्यस्य वनं गतस्यातिदेशवाक्यार्थस्मरणसहकृतगवयपिण्डज्ञानमुपमानम् । अयमसौ गवयशब्दवाच्य इति संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः फलमिति । सा प्रतिपत्तिः शब्दादेव सम्भवति । श्रुतातिदेशवाक्यस्य यो गोसदृशः स गवयशब्दवाच्य इति प्रतिपत्तेः सम्भवात् । ननु प्रवृत्तिनिमित्तस्य गवयत्वस्य तदानीमज्ञानात् कथं वाच्यतेति चेन्मैवम् । स्वयं गवयत्वप्रवृत्तिनिमित्ते ज्ञाते वाच्यवाचकभावसम्बन्धोऽपि तस्य (दूरे प्रदर्शयितुमशक्यत्वात् ।) वनेचरस्तत्सहचरितं सादृश्यमुपदिशति, तेन च गवयत्वमनुमाय श्रोता सङ्केतं ग्रहीष्यति । यथा सहस्राक्षत्वादिनेन्द्रत्वाद्यनुमाय इन्द्रादिपदसङ्केतग्रहः तद्वदिति । तथाच शब्दद्वारा अनुमानेऽन्तर्भावः ॥

अर्थापत्तिरप्यनुमानमेव । तथाहि दृष्टार्थापत्तिस्तावदनुमानम् । जीवन्देवदत्तो गृहे नास्तीति ज्ञानाद् बहिः सत्त्वज्ञानमर्थापत्तिः । तत्रायं प्रयोगः देवदत्तो बहिरस्ति गृहनिष्ठाभावप्रतियोगित्वात् यो यन्निष्ठाभावप्रतियोगी स ततोऽन्यत्र वर्तते । यथाहं बहिर्गृहाद्वर्तमानः इत्यन्वयी व्यतिरेकी वा ।

यदा यो बहिर्नास्ति स तदा गृहनिष्ठाभावप्रतियोग्यपि न भवति । यथा गृहस्थ एव देवदत्तः । श्रुतार्थापत्तिरप्यनुमानम् । पीनो देवदत्तो दिवा न भुङ्क्ते इति श्रुत्वा रात्रौ भुङ्क्ते इति हि कल्पनमर्थापत्तिः— तत्राप्येवं प्रयोगः पीनो देवदत्तः रात्रौ भुङ्क्ते, दिवा अभुञ्जानत्वे सति पीनत्वाद्, यो रात्रौ न भुङ्क्ते स दिवा अभुञ्जानत्वे सति पीनोऽपि न भवति यथा उपवास्यपीन इति । ननु विरोधकरणिकार्थापि कथमनुमानेऽन्तर्भवेदिति चेन्न । मानयोर्विरोधाभावात् । विरुद्धयोश्चान्यतरबाधावश्यंभावेन उभयोर्मानत्वाभावात् । (तथा शुक्लोऽयं पटोऽयम् ।) इदं रजतं नेदं रजतमित्यत्र । एवं हि विरोधकरणत्वं प्रमाणान्तरेण जीवी चैत्र इत्यवगम्य स च क्वाप्यस्तीत्यवगत्य गृहे च नास्तीत्यवगमात् , अस्तिनास्तीत्यनयोर्विरोधात् तत्परिहाराय बहिस्सत्वं अर्थापत्त्या कल्प्यते । अत्र विरोधः करणं बहिस्सत्वप्रतीतिरर्थापत्तिः फलमिति । तत्र क्वाप्यस्तीति मानेन गृहस्यापि विषयीकृतत्वात्तत्र च नास्तीति ज्ञानादनयोर्विरोध इति वाच्यम् । सच नास्ति । गृहेऽस्तित्वनास्तित्वयोर्विरोधः । क्वाप्यस्ति गृहे च नास्तीत्यनयोर्न विरोधः । सामान्यस्य गृहादन्यत्र सत्वेनाप्युपपत्तेः, उत्सर्गापवादन्यायवदिति नार्थापत्त्यपेक्षा । तथापि वा बहिस्सत्वकल्पना अनुमानमेवेत्युदितम् ॥

सम्भवोऽप्यनुमानमेव । स हि सहस्रे शतं सम्भवतीत्येवंरूपः । तत्रायं प्रयोगः— सहस्रं शतादिसङ्ख्यावद् भवितुमर्हति, अधिकसङ्ख्यात्वात् दशसु पञ्चसङ्ख्यावदिति ॥

अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यम् । यथा इह वटे यक्षः प्रतिवसतीति । अस्य वाक्यस्यायं प्रथमवक्तेति न निर्दिश्यते । प्रवादपरम्परा तु (न? )वर्तते । इदं तु आगमरूपत्वादाप्तोक्तं चेदमनुमानमेव । अनाप्तोक्तं चेदमप्रमाणम् ॥

चेष्टा च प्रयत्नजन्या शरीरतदवयवक्रिया । सा सङ्केतानुसारेण वक्तुरभिप्रायानुमापिका । यथा तर्जन्यूर्ध्वतादर्शनेन दशसङ्ख्याप्रतिपत्तिः । क्रियेत्युपलक्षणं संयोगस्यापि, यथा अङ्गुलिमुखसंयोगविशेषेण पिपासाबुभुक्षाद्यनुमानम् । तथान्यस्मादपि संयोगात् कर्तुरभिप्रायानुमानम् ॥

अनुपलब्धेरपि पृथक् प्रमाणमिति भाट्टाः । तथाहि — प्रमाणपञ्चकं

हरणं च दर्शयति । चैत्रगृहमात्रमनुभूय गच्छन् मध्येमार्गं केनचिच्चैत्रो गृहेऽस्तीति पृष्टः पश्चात्किञ्चिद् द्रष्टुं सरन् अनुपलब्ध्या चैत्रो नाभूदिति प्रतिपद्यते । तत्र गृहेन्द्रियसन्निकर्षादेरभावादनुलब्धिरेव प्रमाणमिति । तथा इह भूतले घटो नास्तीति ज्ञानमप्यनुपलब्ध्यैव भवति । घटोपलब्धौ घटाभावस्याज्ञानात् । तदिदमनुपलब्धेरावश्यकत्वात् सैव प्रमाणम् । न प्रत्यक्षादीति । उच्यते । इह भूतले घटो नास्तीति ज्ञानं प्रत्यक्षम् । इन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वाद् अज्ञातकरणजन्यत्वात् । अनुपलब्धिरपि भूतलेऽभावज्ञाने जनयितव्ये न ज्ञाता, अनुपलब्धेरभावत्वेन तज्ज्ञानायानुपलब्ध्यन्तरापेक्षायामनवस्थानात् । अतोऽज्ञातैवानुपलब्धिस्त्वापि मते करणमिति हेतुसिद्धिः । मम त्विन्द्रियमेवाज्ञातं करणम् । नन्विन्द्रियव्यापारस्य भूतलग्रहणोपक्षीणत्वादभावज्ञानस्य तदन्वयव्यतिरेकानुविधानमसिद्धमिति चेत् । न । अधिकरणग्रहणस्याभावग्रहणे व्यापारत्वात् । नहि व्यापारेण व्यापारिणो व्यवधानम् । इन्द्रियसन्निकर्षेण व्यवधाने रूपादिज्ञानमप्यैन्द्रियकं न स्यात् । निर्गन्धं कुसुममिति गन्धाभावग्रहणे न घ्राणव्यापारव्यधिकरणग्रहे उपक्षयः । तेन कुसुमद्रव्यग्रहणात्तत्राभावग्रह एवोपक्षयो वाच्य(म्?) । तद्वदन्यत्राप्यभावग्रहे इन्द्रियस्य करणत्वं वाच्यमिति । यदप्यसङ्कीर्णोदाहरणं, तदपि न । तत्राप्यनुमानसम्भवात् । अनुपलब्धिस्तत्र ज्ञाता करणम् । स्मर्तुं योग्यस्य चैत्रस्य स्मरणाभावेनानुपलब्धिं ज्ञात्वा तयानुपलब्ध्या चैत्रो नाभूदित्यनुमिनोति । चैत्रो गृहे तदा नाभूत् उपल(ब्धि)योग्यत्वे सत्यनुपलब्धत्वात् । यो यदा यत्र नोपलभ्यते स तदा तत्र नास्ति यथाहमिति । एवमन्योऽपि कश्चिदभावोऽनुमेयः । आत्मा नीरूपः स्पर्शरहितत्वाद्, आकाशवत् । एवं रामाद्यभाव आगमग्राह्यः । अतोऽनुपलब्धिर्यथायथमन्तर्भूता । अतो विद्या चतुर्विधेति सिद्धम् । तथा अविद्यापि चतुर्विधैव । एवं बुद्धिरष्टविधा ॥

अत्र गुणानां परस्परं साधर्म्यं किञ्चिदुच्यते । रूपरसगन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगानां दशानां मूर्त्तगुणत्वं साधर्म्यम् । तत्र दिक्कृते परत्वापरत्वे मनसः । कालकृते दिक्कृते च भूतचतुष्टयस्य । स्पर्शश्च तस्यैव । वेगोऽपि मनसा सह तस्यैव । द्रवत्वरूपे भूतत्रयस्य । भूतद्वयस्य रसगुरुत्वे । स्नेहो जलस्य । गन्धः पृथिव्यामेव । बुद्ध्यादीन

नवानामात्मविशेषगुणत्वम् । शब्दसहितानां तेषाममूर्तगुणत्वम् । सङ्ख्या-
दीनां पञ्चानां मूर्तामूर्तगुणत्वम् । सर्वद्रव्यवृत्तित्वात् । रूपरसगन्धस्पर्श-
स्नेहसांसिद्धिकद्रवत्वानि बुद्ध्यादयश्च शब्दश्चैतेषां षोडशानां विशेषगुण-
त्वम् । स्वाश्रयव्यवच्छेदोचितावान्तरसामान्यविशेषवत्त्वं विशेषगुणत्वम् ।
सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्ववेग-
स्थितस्थापकानां सामान्यगुणत्वम् । संयोगविभागद्वित्वद्विपृथक्त्वादीना-
मनेकाश्रितगुणत्वम् । अनेकाश्रितत्वं व्यासज्यवृत्तित्वम् । अन्येषामेकैक-
वृत्तित्वम् । रूपरसगन्धस्पर्शशब्दानां बाह्यैकेन्द्रियग्राह्यत्वम् । सङ्ख्यापरि-
माणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगानां बाह्येन्द्रियग्राह्यत्वम् ।
बुद्ध्यादीनां षण्णामन्तरिन्द्रियग्राह्यत्वम् । धर्माधर्मभावनागुरुत्वस्थिति-
स्थापकानामतीन्द्रियत्वम् । अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्व-
गुरुत्वद्रवत्वस्नेहस्थितिस्थापकवेगानां कारणगुणपूर्वकत्वम् । पाकस्तु परमा-
णावेव । द्व्यणुकादौ त्वपाकजाः । अपाकजत्वविशेषणं स्पर्शान्तानाम् । बु-
द्ध्यादीनां शब्दस्य चाकारणगुणपूर्वकत्वम् । शब्दतूलादिपरिमाणविशेष
उत्तरसंयोगनैमित्तिकद्रवत्वपरत्वापरत्वपाकजानां संयोगजत्वक्रमेण भेरी-
दण्डसंयोगप्रशिथिलसंयोगपूर्वसंयोगाग्निसंयोगकालदिक्पिण्डसंयोगाग्निसं-
योगाजनकसंयोगविभागवेगानां कर्मजत्वशब्दोत्तरविभागयोर्विभागजत्व-
परत्वापरत्वद्वित्वद्विपृथक्त्वादीनां अपेक्षा बुद्धिजत्वम् । तद्विनाशविनाश्य-
त्वं च । रूपरसगन्धस्पर्शशब्दानां मूर्तगुणत्वम् । रूपरसगन्धानुष्णस्पर्श-
परिमाणैकत्वैकपृथक्त्वस्नेहानां समानजात्यारम्भकत्वम् । अवयवगताना-
मेषामवयविगतारम्भकत्वात् । उष्णस्पर्शस्य द्रवत्वादिविजातीयारम्भकत्व-
मप्यस्तीत्यनुष्णेति विशेषणम् । सुखदुःखेच्छाद्वेषप्रयत्नानामसमानजात्यार-
म्भकत्वम्, सुखमिच्छां, दुःखं द्वेषम्, इच्छाद्वेषौ प्रयत्नं, प्रयत्नश्च क्रियां
जनयति । संयोगवियोगसङ्ख्यागुरुत्वद्रवत्वोष्णस्पर्शज्ञानधर्माधर्मसंस्काराणां
समानासमानजात्यारम्भकत्वम् । संयोगः संयोगशब्दौ जनयति । वि-
भागोऽपि विभागशब्दौ, सङ्ख्या सङ्ख्यापरिमाणे । गुरुत्वं गुरुत्वक्रिये ।
द्रवत्वं द्रवत्वक्रिये । उष्णस्पर्शश्चोष्णस्पर्शपाकजान् । ज्ञानं स्मृतिसुखा-
दीन् । धर्मो धर्मसुखे । अधर्मोऽधर्मदुःखे । भावना भावनास्मृती । वेगो
वेगक्रिये । स्थितिस्थापकश्च स्थितिस्थापकक्रिये । जनयतीति समानास-

मानजात्यारम्भकत्वम् । बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दानां स्वाश्रयसमवेतारम्भकत्वम् । बुद्ध्यादय आत्मनि स्वाश्रये सुखादीन् जनयन्ति । शब्दस्तु गगने शब्दम् । रूपरसगन्धस्पर्शपरिमाणस्नेहप्रयत्नानां परत्रारम्भकत्वम् । परत्र स्वाश्रयादन्यत्र । स्नेहान्ता अवयवगता अवयविनि । प्रयत्नश्च शरीरे क्रियाम् । संयोगविभागसङ्ख्यैकत्वैकपृथक्त्वगुरुत्वद्रवत्ववेगधर्माधर्मास्तूभयत्रारम्भकाः । संयोगः स्वाश्रये क्रियां शब्दञ्च । परत्र तु संयोगम् । वेणुदलाकाशविभागः स्वाश्रये शब्दम् । परत्र कायपुस्तकादौ विभागम् । एकत्वैकपृथक्त्वे स्वाश्रये द्वित्वद्विपृथक्त्वादीन् जनयतः । परत्रावयविनि एकत्वैकपृथक्त्वे । गुरुत्वद्रवत्वे स्वाश्रये क्रियाम् । परत्र चावयविनि गुरुत्वद्रवत्वे । वेगः स्वाश्रये क्रियाम् । परत्र च वेगम् । धर्माधर्मौ स्वाश्रये सुखदुःखे । परत्र वाय्वादौ क्रियां जनयत इत्युभयत्रारम्भकत्वम् । गुरुत्वद्रवत्ववेगस्थितिस्थापकधर्माधर्मसंयोगविशेषाणां क्रियाहेतुत्वम् । संयोगविशेषो नोदनाख्यः । रूपरसगन्धानुष्णस्पर्शपरिमाणैकत्वैकपृथक्त्वस्नेहशब्दानामसमवायिकारणत्वम् । बुद्ध्यादीनां नवानां निमित्तकारणत्वम् । संयोगविभागोष्णस्पर्शगुरुत्वद्रवत्ववेगानामुभयथा कारणत्वम् । परत्वापरत्वद्वित्वद्विपृथक्त्वादीनामकारणत्वम् । ज्ञानव्यतिरिक्तका(र्यत्वं ? र्यं) प्रति इति द्रष्टव्यम् । संयोगविभागात्मविशेषगुणशब्दानां प्रदेशवृत्तित्वम् । इतरेषामाश्रयव्यापित्वम् । अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वस्नेहसांसिद्धिकद्रवत्वानां यावद्द्रव्यभावित्वम् । इतरेषां तु अयावद्द्रव्यभावित्वम् । रूपादीनां सर्वेषां गुणत्वाश्रयत्वं द्रव्याश्रितत्वं (च) साधर्म्यमेवेतरापे(क्षा ? क्ष)या वैधर्म्यञ्च भवति । इत्याद्यूह्यमिति ॥

इति श्रीमाधवसरस्वतीविरचितायां सर्वदर्शनकौमुद्यां
वैशेषिकदर्शननिरूपणे गुणपदार्थः ॥

---

## अथ कर्मपदार्थः ।

संयोगविभागद्वयासमवायिकारणजातीयं कर्म । एकैकत्र कारणयोस्संयोगविभागयोर्वारणाय द्वयेति । विनश्यदवस्थद्रव्ये कर्मणि चाव्याप्तिवारणाय जातीयेति । समवायिकारणप्रत्यासन्नत्वमसमवायिकारणत्वम् ।

द्विविधा च प्रत्यासत्तिः समवायिकारणप्रत्यासत्तिः (अ)समवायिकारणप्रत्यासत्तिश्चेति । तत्राद्यं पटस्य तन्तुद्वयसंयोगः । द्वितीयन्तु पटशौक्ल्यं प्रति तन्तुशौक्ल्यम् । तच्च पञ्चधा भिद्यते उत्क्षेप(ण)मपक्षेपणमाकुञ्चनं प्रसारणं गमनञ्चेति । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । अभिमुखसंयोगहेतुराकुञ्चनम् । तिर्यग्देशसंयोगहेतुः प्रसारणम् । विष्वग्देशसंयोगहेतुर्गमनम् । विष्वगित्यनियतदेशः । भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यक्पवननमनोन्नमनादयो गमनविशेषाः । कर्मणान्तु कर्मत्वजातिसंयोगः साधर्म्यम् । उत्क्षेपणत्वाद्यवान्तरजातिभेदो वैधर्म्यम् । असमवायिकारणत्वं च सर्वेषां कर्मणां साधर्म्यम् । गुरुत्वद्रवत्वसंयोगयत्नजत्वं स्वकार्यसंयोगनाश्य(त्वम् ? त्वं च) । ननु कर्मत्वजातौ किं व्यञ्जकमिति चेत् चलतीति प्रत्ययगोचरे यद् ।विशेष(णत्वं ? णं) तदेव व्यञ्जकमिति गृह्या(णम् ? ण) । ननु कर्मैव नास्ति, चलतीति प्रत्ययस्य संयोगविभागपरम्पराविषयत्वात् । ततः संयोगादिसन्तानव्यतिरेकेण कर्मपदार्थो नास्तीति भूषणः । उच्यते । यदि चलतीति प्रत्ययः संयोगादिसन्तानविष(यस्या ? यः स्या)त्तदापि पालिकादिसंयोगविभागसन्तानयुते स्तम्भादौ चलतीति प्रत्ययप्रसङ्गात् । किञ्च इदमनेन संयुज्यते इदमनेन विभज्यते इ(ति ? त्यत्र) संयोगादेः सप्रतियोगित्वं दृश्यते न तथा शाखाग्रं चलतीत्यत्र दृश्यते । अतः कर्म पृथगेवाभ्युपेतव्यम् । नतु गणत्वेन । तच्चैकद्रव्यसमवेतं मूर्तद्रव्यवृत्ति । परिच्छिन्नपरिमाणं मूर्तत्वम् । आशुविनाशित्वञ्च कर्मणः । संयोगवेगस्थितस्थापकविभागारम्भकत्वं द्रव्यानारम्भकत्वं संयोगिनामभिमतदेशं प्रति मनश्चलनं, सर्गादौ चाणूनां कर्म, अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनं, प्रतिमादावौत्पातिकं चलनम्, अयस्कान्तं प्रत्ययसश्चलनं चोरपरीक्षणायामभिमन्त्रितं कांस्यादिगमनमित्याद्यदृष्टजन्यम् । अस्मत्प्रत्यक्षनिष्ठं कर्म प्रत्यक्षमेव । अतीन्द्रियगतन्त्वतीन्द्रियम् । कर्मातीन्द्रियमेवेति प्राभाकरः । तं प्रत्युच्यते। अस्मत्प्रत्यक्षनिष्ठं कर्म प्रत्यक्षं भवितुमर्हति, अस्मत्प्रत्यक्षसंयोगासमवायिकारणत्वात् । यदेवं तदेवं यथा पटतुरीसंयोगासमवायिकारणं तन्तुतुरीसंयोगः अस्मच्चक्षुर्वा संयोगेतरसंयोगासमवायिकारणप्रकाशत्वद्रव्यग्राहकेन्द्रियत्वात् । यदुक्तसाधनं तदुक्तसाध्यम् । यथा प्रयत्नवदात्ममनस्संयोगासमवायिकारणं प्रयत्नग्राहकं मनः तथा कर्म अस्मदिन्द्रियग्राह्यवृत्त्यवान्तरजाति-

मज्जातिमत्त्वाद् गोवदिति कर्मे प्रत्यक्षत्वेऽनुमानत्रयम् । (अ ?)ननु भ्रमणादीनां गमनेऽन्तर्भावः किमित्युच्यते जातिभेदा एव किमिति नोच्यन्ते इति चेन्नैवम् । जातिसङ्करप्रसङ्गात् । कूपे वंशपत्रपतने सति प्रवेशत्वपतनत्वभ्रमणत्वानां सङ्करप्रसङ्गः । प्रवेशत्वं गृहादिप्रवेशेऽन्यपरिहारेण वर्तते । पतनत्वं चेष्टादौ । भ्रमणत्वञ्चालातचक्रादौ । तेषां परस्परपरिहारेण वर्तमानानां वेणुपत्रपतने सङ्करप्रसङ्गः । हस्तक्रियातो मुसलसंयोगः । तस्मादूर्ध्वदेशसंयोगहेतुक्रिया हस्तमुसलसंयोगयोर्जायते तदुत्क्षेपणम् । पुनरधोदेशसंयोगेच्छा ततः प्रयत्नः ततो हस्तमुसलयोरधोदेशसंयोगहेतुभूता क्रिया जायते तदपक्षेपणम् । इत्याद्यूह्यम् ॥

इति कर्म ॥

---

## अथ सामान्यपदार्थो निरूप्यते ।

समानानां भावस्सामान्यम् । अनुगताकारबुद्धिहेतुस्सामान्यम् । तद् द्विविधम् — उपाधिरूपं जातिरूपञ्चेति । पाचकत्वादि तूपाधिरूपम् । पाचकत्वमेव पाकक्रियाद्वारा तदाधारे प्रतीयमानं पाचकत्वम् । एवं प्रमात्वमेव प्रमाविषये प्रमाद्वारा वर्तमानं प्रमेयत्वम् । एवमन्यत्रापि स्वरूपसम्बन्धेन वर्तमाना जातिरेव उपाधिसामान्यमुच्यते नित्यमनेकसमवेतं सामान्यं जातिः । केचिद्विशेषव्यावृत्त्यर्थमेकपदं दातव्यमिति वदन्ति । तद् व्यर्थम् । एकस्य विशेषस्यानेकवृत्तित्वाभावात् । तच्च जातिरूपं त्रेधा — परमपरं परापरञ्चेति । तत्र परं सत्तासामान्यम् । व्यापकत्वात् । सत्त्वन्तु न जातिः किन्तु प्रमेयत्वन्त्वौपाधिकं सामान्यमिति प्राभाकरः । तस्य सत्त्वमचाक्षुषं स्यात् । प्रमेयत्वस्य प्रमाघटितत्वात् । प्रमायाश्चाचाक्षुषत्वात् । असदपोह एव सत्ता । इत्यपोहवादिनस्सौगताः । तन्न । इतरेतराश्रयत्वे नापोहजातिनिरासात् । अतो द्रव्यादित्रितये सदित्यनुगतबुद्धिहेतुः सत्ताजातिरभ्युपेया । सा सामान्यमेव । अनुवृत्तेरेव हेतुत्वात् । तत्र मानं विवादाध्यासितानि द्रव्यगुणकर्माणि एकजातिमन्ति सामान्यादन्यभावत्वाद् गोवत् । अपरं घटत्वादि । व्याप्यमात्रत्वात् । तच्चावयवसंयोगरूपसंस्थानव्यङ्ग्यं प्राभाकरस्यापि सम्मतम् । संस्थानविशेषव्यङ्ग्या जातिरिति तेनाभ्युपगमात् । परापरं द्रव्यत्वादि । सत्तां प्रति व्याप्यत्वात्, गोत्वादिकं प्रति व्यापकत्वाच्च । केषु-

चिदतु(व्यक्तेः ? वृत्तेः) केण्याश्चिद्व्यावृत्तेश्च हेतुत्वाद् द्रव्यत्वे मानम् । आकाशकालदिशस्सत्तातिरिक्तजातिमन्तः संयोगविभागजनकत्वात् कर्मवत् गोवद्वा । यज्जातिराकाशादिषु सत्तातिरिक्ता सिद्धा तदेव द्रव्यत्वम् । आत्मा शाबलेयवृत्त्यवृत्तिशाबलेयानिष्ठजातिमान् संयोगित्वात् शाबलेयवत् । शाबलेये गोत्वमेवंविधा जातिः । पक्षे तु द्रव्यत्वमेव सिद्ध्यति । आत्मत्वस्य शाबलेयावृत्तित्वात् । सत्तायाश्च शाबलेयवृत्तिगुणकर्मवृत्तित्वात् । गोत्वस्य बाधितत्वात् । अन्यस्या जातेस्तत्राभावात् । गुणत्वे मानं रूपादिकं रूपत्वाद्यन्यकर्मानाश्रितजातिमद् भवितुमर्हति सामान्यवत्त्वे सति कर्मान्यत्वाद् गोवत् । कर्मत्वे मानम् उत्क्षेपणादिकम् उत्क्षेपणत्वाद्यन्यगुणावृत्तिजातिमत् केवलनिमित्तव्यावृत्तत्वे सति गुणान्यत्वाद् गौरिव इति । सामान्यादिनिरासाय केवलेत्यादि । यत्र जातेर्बाधकं तत्रैवौपाधिकं सामान्यम् । व्यक्तेरभेद इत्यादि तु जातिबाधकम् । तच्चोक्तद्रव्ये एव ॥

इति सामान्यपदार्थः ॥

---

## अथ विशेषपदार्थः ।

सामान्यशून्या अत्य(न्ता ? न्त)व्यावृत्तबुद्धिहेतवो विशेषाः । यदुक्तम् — नित्येष्वेव द्रव्येष्वेव वर्तन्त एव तेऽनन्ता विशेषा इति । एकद्रव्याः स्वरूपसन्तो विशेषा इत्युदयनः । अजातिरेकवृत्तिरिति तार्किकरक्षा । स चैकैकद्रव्यमात्रवृत्तिः । यथास्मदादीनां द्रव्यादिषु जातिगुणक्रियाभिर्व्यावृत्तबुद्धिरुपजायते । तथास्मद्विशिष्टानां योगिनां परमाणुगणे मुक्तात्मसु मनस्सु दिक्कालगगनेषु च विशेषपदार्थाद्व्यावृत्तिर्भवति । परमाणुषु समानजातिगुणक्रियेषु व्यावर्तकान्तराभावात् । यथा, आप्याः परमाणवः समानजलजातीयाः समानशुक्लगुणाः एकां दिशं प्राचीं प्रतीचीं वा गच्छन्तीति समानक्रियाः, तेषु स एवायं यः पूर्वमनुभूत इति प्रत्यभिज्ञा जायते । तत्र विशेष एव व्यावर्तकः । एवमुक्तेष्वपि । दिक्कालयोश्च परस्परं विशेष एव व्यावर्तकः । तेन विना व्यावृत्त्यसम्भवात् । इदमेकं मानम् । अपरञ्च, अनारब्धकार्याः समानजातिगुणकर्माणः परमाणवो मुक्तात्मानश्च परस्परव्यावर्तकधर्मवन्तः जातिमत्त्वात् कुम्भवत् । विशेषेषु न विशेषान्तरम् । किन्तु स्वत एव व्यावृत्तिः । जडप्रकाशनाय दीपोऽङ्गीक्रियते,

नतु दीपप्रकाशनाय दीपान्तरम् । एवं सामान्यसमवाययोरपि न विशेषः । आश्रयविशेषादेव सामान्यव्यावृत्त्युपपत्तेः । सम्बन्धिभ्याञ्च समवायस्येति ॥

विशेषस्य पदार्थस्य साधनात् कणभुङ्मते ।
वैशेषिकाख्यया प्रोक्ताः काणादास्तीर्थिका भुवि ॥

इति विशेषपदार्थः ॥

---

## अथ समवायः ।

नित्यस्सम्बन्धस्समवायः । अयुतसिद्धयोस्सम्बन्धस्समवाय इति वा । अयुतसिद्धौ अपृथक्सिद्धौ । तदुक्तम् —

तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोः ।
अवश्यमेकमपराश्रितमेवावतिष्ठते ॥"

सच एक एवावयवावयव्यादिभेदाद् भेदेन व्यपदिश्यते । यथा अवयवावयविनोर्गुणतद्वतोः क्रियातद्वतोः सामान्यतद्वतोः विशेषनित्यद्रव्याणाञ्चैतेषां सम्बन्धिनां भेदाद् भेदव्यवहारः । स च इह तन्तुषु पटः, इह गवि गोत्वं, इह रूपम्, इह क्रियेत्यादिव्यवहारेणानुमीयते। विमत इहप्रत्यय आधाराधेयसम्बन्धनिमित्तः अबाधितेहप्रत्ययत्वात् इह कुण्डे बदराणीति प्रत्ययवत् इति । तत्र संयोगो न सम्भवति । पृथक्सिद्धयोरेव तस्य सिद्धत्वात् । अन्यस्य मुख्यसम्बन्धस्य भावात् । नच तादात्म्यम् । भिन्नयोस्तदसम्भवात् । ततश्च पक्षधर्मताबलाद् यस्सिद्ध्यति । स एव समवायः इति । यद्वा नीलं सरोजमिति विशेषणविशेष्यभावस्तत्सम्बन्धपूर्वकः जातिमन्मात्रविशेषणविशेष्यभावत्वात् , दण्डीति विशेषणविशेष्यभाववदिति । तत्रापि पूर्ववत्परिशेषात्समवायसिद्धिः । अथवा, विमतं द्रव्यादि नित्यसम्बन्धसम्बद्धं, गुणवत्त्वादाकाशवत् । नच भाट्टस्य साध्यवैकल्यं, दृष्टान्ते तेनापि शब्दाकाशयोर्नित्यसंयोगाङ्गीकारात् । स्वमते तु सत्ताकाशसम्बन्धस्य नित्यत्वात् । तस्मात् समवायः प्रामाणिकः । स च सर्वत्रेहप्रत्ययमात्रगम्यत्वादेक एव । एतेनानेकसमवायवादिनः प्राभाकरा निरस्ताः । तत्र प्रमाणाभावात् । एकत्वे अनुमानान्तरञ्च । विमता द्रव्यादयो

गगनशब्दसमवायेन समवायिनः समवायित्वाद् गगनशब्दवदिति । तथाच गगनशब्दयोस्समवाय एव सर्वत्र सिद्ध्यतीत्येकत्वासिद्धिः । अत एव स्वस्यापि सम्बन्धिभ्यान्न सम्बन्धान्तरकल्पना स्वरूपसम्बन्धेनैव सम्बन्धिनोर्वर्तते । संयोगस्य तु कार्यत्वात् कारणे सम्बन्धान्तरापेक्षा । अत एवास्मदाद्यतीन्द्रियः प्रत्यक्षाप्रत्यक्षसम्बन्धित्वाद् गगनघटसंयोगवत् । समवायः प्रत्यक्षः, विशेषणविशेष्यभावश्चेन्द्रियसन्निकर्ष इति गौतममतानुसारिणः । तन्न । विशेषणविशेष्यभावेन परमाण्वादेरपि ग्रहणप्रसङ्गात् । विशेषणविशेष्यभावश्चागत्या अभावे अङ्गीक्रियते । नान्यत्रेति स्थितिः । स च नित्यः असमवेतभावत्वाद्, गगनवदिति नित्यत्वे मानम् । सामान्यरहितभावत्वाद्वा सामान्यवदिति नित्यत्वसिद्धिः । लक्षणं तूक्तमेव । ननु लक्षणमतिव्यापकम् । विभुसंयोगे तस्य नित्यसम्बन्धत्वादयुतसिद्धत्वाच्च इति चेन्न । विभुसंयोगे कारणाभावात् । अन्यतरकर्म उभयकर्म संयोग-(ज ?)श्च संयोगकारणम् । विभुनोस्तदसम्भवः । द्रव्यत्वात् संयोगसाधने तत्त्वादेव विभागसाधनमपि स्यात् । अत्र सूत्रसम्मतिः इहेति यतः कार्यकारणयोस्समवाय इति कार्यकारणयोरित्ययुतसिद्धोपलक्षणम् । युतशब्देनामिश्रणं गृह्यते । यु मिश्रणामिश्रणयोरिति धातोरमिश्रणार्थस्य स्वीकारात् । अमिश्रणाभावो मिश्रणमेव ततश्चायुतसिद्धत्वमपृथक्सिद्धत्वमिति सिद्धम् ॥

इति समवायपदार्थः ॥

---

॥ सप्तमो भावपदार्थः पूर्वमेव निरूपितः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यविद्येन्द्रवनशिष्य
परमहंसमाधवसरस्वतीरचितायां सर्वदर्शनकौमुद्यां
कणाददर्शनं यथाबुद्धि निरूपितम् ॥

---

अथनैयायिकदर्शनं निरूप्यते—

तत्र गौतमीयं प्रथमसूत्रं विषयप्रयोजनपरम् । "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छल-

जातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः'' । इति । अतस्तेषां षोडशपदार्थानां तत्र प्रमाव्याप्तं क्षणिकेतरं प्रमाणम् । तेन सुखादौ नातिव्याप्तिः तस्य क्षणिकत्वात् । तद् द्विविधम्—लौकिकमलौकिकञ्चेति । आद्यं प्रमाकरणम् । ननु प्रमाकरणस्य कथं प्रमाव्याप्तिः, इन्द्रियादौ सति प्रमावश्यम्भावाभावात् । सत्यम् । इन्द्रियादिमात्रं हि न करणम् । किन्तु व्यापारवत् । व्यापारश्चेन्द्रियसन्निकर्षलिङ्गपरामर्शादिः । व्यापारवतीन्द्रियादौ सति प्रमा भवत्येवेति प्रमाव्याप्तिः । करणस्येन्द्रियसन्निकर्षादेरेव वा प्रमाणत्वम् । परमकारणस्यैव करणत्वं वदन्तः वार्त्तिककारमतानुसारिणो निर्व्यापारस्यापि करणत्वमास्थिषत । तस्य प्रमाव्याप्तिरस्त्येवेति न कश्चिद्दोषः । अलौकिकञ्च प्रमाणमीश्वरः । तस्य नित्यप्रमया व्याप्तिरस्त्येव । यथाहुः—

"मितिस्सम्यक् परिच्छित्तिस्तद्वत्ता च प्रमातृता ।<br>
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥"

इति ॥

अयोगव्यवच्छेदो व्याप्तिरेव । तथा, "शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिव" इति च । नापि प्रमेयेऽतिव्याप्तिः, न वा प्रमातरि । तयोः प्रमाव्याप्त्यभावात् । अज्ञातप्रमेयसिद्धये हि प्रमाणं मृग्यते । सुषुप्त्यादौ प्रमाभावात् । अतो निर्दुष्टं लक्षणमिति । यथार्थानुभवः प्रमा, प्रमाश्रयः प्रमाता, प्रमाविषयः प्रमेयमिति, प्रमाणमिति करणव्युत्पत्तिरेव विवक्षिता प्रमीयतेऽनेन तत् प्रमाणमिति । न(त्व ? तु) प्रमितिः प्रमाणमिति भावव्युत्पत्तिः । नवा प्रमीयते इति कर्मणि, न च प्रमिणोतीति कर्तरि, ततश्च नाव्याप्तिः नासम्भवो वा ॥

अव्युत्पन्नगवादिपदोपेतं यद्वाक्यं तदर्थस्य गवयादिसंज्ञिनि प्रत्यभिज्ञानमुपमानम् । संज्ञासंज्ञिसम्बन्धप्रत्ययः फलम् । तदुक्तम्—

सम्बन्धस्य परिच्छेदः संज्ञायां संज्ञिना सह ।<br>
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥

इति ॥

तत्रायं क्रमः— गवयार्थी कश्चिद् गवयमजानानः पुरवासी समागतं वनेचरं पृच्छति कीदृग् गवय इति। सः प्रतिब्रूते गोसदृशो गवय इति। सोऽतिदेशवाक्यश्रवणानन्तरं वनं गतोऽतिदेशार्थं स्मरति । ततः प्रत्यभिजानाति अयमसौ गोसदृश इति । ततोऽयं गवयशब्दवाच्य इति प्रत्येति। स च प्रत्ययो न प्रत्यक्षफलं नश्रुतवाक्यस्यापि प्रसङ्गात् । नाप्यनुमानफलम् । व्याप्त्यभावात् । नापि वाक्यफलम् । अदृष्टगवयस्यापि प्रसङ्गात्। नापि समाहारफलम् । वाक्यप्रत्यक्षयोर्भिन्नकालत्वात् । अतो मानान्तर मुपमानमपेक्षणीयम् । इत्यौदयनः पन्थाः । तथा कीदृगश्व इति पृष्टे ब्रूते गोवद् द्विशफो न भवत्यश्व इति । तस्मादपि तादृशपिण्डदर्शनानन्तरम् अयमसौ गोसदृश इति प्रत्यभिज्ञानं भवति । ततोऽयमश्व इति वाच्यवाचकभावसम्बन्धप्रत्ययो भवति । त(तो? थो)दीच्येन करभं निन्दता उच्यते—

दीर्घग्रीवः प्रलम्बोष्ठश्चतुष्पाद्विकटाकृतिः ।
कठोरकणकाशी च पशुः करभ .... ॥

इति । तच्छ्रुत्वा उत्तरापथं गतस्य दाक्षिणात्यस्य तादृशं पशुं दृष्ट्वा भवति मतिः करभोऽयमिति । एवमतिदेशवाक्यार्थत्रैविध्यादुपमात्रैविध्यम् । नचोपमानादेव संज्ञासंज्ञिसम्बन्धप्रत्ययनियमः । किन्तु उपमानफलं संज्ञासंज्ञिसम्बन्धप्रत्ययः इति नियमः । तेन प्रत्यक्षोपदेशादिह सहकारवने कोकिलो रौतीति प्रसिद्धपदसमभिव्याहारात् सहकारपदसमभिव्याहाराच्च भवति सङ्केतप्रत्ययः । नन्वनुमानादेव संज्ञासंज्ञिसम्बन्धप्रतिपत्तिर्भविष्यति । गवयशब्दो गवयत्वस्य वाचकः । असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्। योऽसति वृत्त्यन्तरे यत्र प्रयुज्यते स तस्य वाचकः । यथा गोशब्दो गोत्वस्येति प्रयोगादिति चेन्न । विशेषणासिद्धत्वाद्धेतोः । उपचारेणापि पदप्रयोगोपप(त्तौ? त्ताव)सति वृत्त्यन्तर इति विशेषणस्यासिद्धत्वात् । इतरेतराश्रयत्वाच्च । असति वृत्त्यन्तरज्ञाने वाचकत्वज्ञानं, वाचकत्वज्ञाने सति वृत्त्यन्तराभावज्ञानमिति । नन्वतिदेशवाक्यादेव वाच्यवाचकभावो गृह्यताम्। यो गोसदृशः स गोशब्दवाच्य इति चेन्न । तदानीं प्रवृत्तिनिमित्तगवयत्वस्याप्रतीतेः । प्रवृत्तिनिमित्तज्ञानमन्तरेण सङ्केतासम्भवात् । नच सादृश्यमेव प्रवृत्तिनिमित्तम् । तत्र गोप्रतियोगि(ता? क)त्वेन गोरपि निमित्तत्वेन वाच्यत्वप्रसङ्गात् । सादृश्यस्योपाधित्वेन गौरवाच्च । गवयत्वस्य

जातित्वेन लाघवात् तदेव निमित्तम् । तस्य (तस्य ?) तदाज्ञानात् । किञ्च, वनेचरः स्वावगतगवयबोधनायोपदिशति स्वयञ्च वृद्धव्यवहारात् गवयत्वे व्युत्पन्नः, नतु सादृश्ये । तच्च निमित्तं साक्षादवगमयितुमशक्तः तदुपलक्षकं सादृश्यमुपदिशति । तदवगमान्नागरिकोऽपि वनं गतो बुध्यते गवयोऽयमिति । अतस्तद्वाक्यम् अनन्तरमेवोत्थापयतीति स्थितम् । मीमांसकादिमतोपमानं तु प्रागेवान्तर्भावितमनुमानेन । यत्तु भूषणेनोक्तं— वाक्यादेव गवयप्रतीतिः, तथा प्रश्नोत्तराभिधानात् । मानान्तरानिर्देशाच्च । कथं त्वं जानीषे गवयनामायमिति पृष्टो ब्रूते, वनेचरवचनादिति । नतु ब्रूते मानान्तरादितीति । तन्न । गवयज्ञानस्य वनेचरोपदेशमूलत्वात् तथाभिधानसम्भवात् । लाङ्गलं जीवनमितिवत् । तदभिप्रायेणैव मानान्तरा(?)दनुपदेशः । उपमानसाधनयुक्तेश्चोक्तत्वादित्युपरम्यते ।

अथागमो निरूप्यते ।

आप्तवाक्यमागमः । यथार्थदर्शी यथादृष्टार्थवादी चाप्तः । आकांक्षायोग्यतासन्निधिमान् पदसमूहो वाक्यम् । यद्यपि प्रतिपत्तुर्जिज्ञासा नाकांक्षा । जिज्ञासारहितस्यापि वाक्यार्थप्रत्ययोपपत्तेः । अकस्माच्छ्रुतात् पुत्रमरणादिवाक्यात् तदर्थप्रत्ययदर्शनात् । तथाप्यभिधानपर्यवसानमाकाङ्क्षा । गामित्युक्ते किमानयामि बध्नामि वेत्याकाङ्क्षयाभिधानं न पर्यवस्यति । आनयेत्युक्तेऽपि गां घटं वेत्याकांक्षयाभिधानं न पर्यवस्यति ततस्तदभिधानस्य पर्यवसानमेवाकाङ्क्षा । बाधकप्रमाविरहो योग्यता । अग्निना सिञ्चेदित्यत्र बाधकप्रमासम्भवादयोग्यता । आसत्तिश्च पदानामविलम्बेनोच्चारणम् । एतत्त्रितययुक् पदसमूहो वाक्यम् । एतच्च स्वतन्त्रं प्रमाणम् । नानुमानान्तर्भूतम् । अनुमानान्तर्भावे हि वक्तृज्ञानविषयतया संसर्गसिद्धिः स्यात् । एतानि पदानि स्मारितार्थज्ञानपूर्वकाणि, आकाङ्क्षादिमत्पदकदम्बकत्वात् वाक्यान्तरवदिति ह्यनुमानम् । तथा च श्रोतुः पदार्थसंसर्गविषयवक्तृज्ञानज्ञानं भवति । न तु साक्षात् संसर्गज्ञानं भवति । साक्षात् संसर्गज्ञानं प्रवर्तकम् । न तु ज्ञानज्ञानम् । अयं घटज्ञानवानिति ज्ञानादन्यस्याप्रवृत्तेः । किन्तु ममेदमिष्टसाधनमिति ज्ञानादेव सर्वस्य प्रवृत्तिदर्शनात् । तच्चानुमानपक्षे न सम्भवति । अतो वाक्यप्रमाणादेवेष्टसाधनतां बुद्ध्वा श्रोता प्रवर्तते । न तु वक्तृज्ञानानुमानादिति सिद्धं शब्दस्य पृथक् प्रामाण्यम् ॥

यत्तु अर्थपक्षकमनुमानम् — एते पदार्थाः मिथस्संसर्गवन्तः आकाङ्क्षादिमत्पदसमूहस्मारितत्वात् घटमानयेति पदार्थवत् । यद्वा, सैव प्रतिज्ञा योग्यतासत्तिमत्त्वे सति संसर्गपरपदस्मारितत्वात् । अनाप्तवाक्ये योग्यतादिविरहान्न व्यभिचारः । बाधकप्रमाविरहो योग्यता । अनाप्तवाक्ये तु बाधकसत्त्वात् तज्जन्यज्ञानस्य च भ्रमत्वात् । अतोऽर्थपक्षकानुमानेनागमस्यानुमानान्तर्भाव इति । तन्न । यत्र हि विमलं जलं नद्याः कच्छे महिषः चरतीति प्रयुङ्क्ते, श्रोता तु विमलं जलमित्यश्रुत्वैव नद्याः कच्छे महिषश्चरतीति शृणोति, तत्र नदीकच्छयोः संसर्गवत्त्वाभावेऽपि उक्तविशेषणविशिष्टपदस्मारितत्वसद्भावाद्व्यभिचारः । तत्र हि नद्या इत्यस्य न कच्छेन संसर्गः, किन्तु जलेन । नद्या जलं हि विमलमिति प्रतीतेः । कच्छस्य महिषेण सम्बन्धः । तथा च नद्याः कच्छेनाकांक्षादिर्वर्तते संसर्गश्च नास्तीति भवति व्यभिचारः । अतो नेदमप्यन्तर्भावकम् ॥

तत्त्वचिन्तामणिकारस्तु शब्दस्य लिङ्गत्वाभावे पार्थक्येन मानत्वे च युक्तिमाह — बाधकप्रमाणाभावो योग्यता । सा चलनलिङ्गविशेषणम् । बाधकप्रमाभावमात्रविरहस्य सर्वत्र निश्चेतुमशक्यत्वात् । स्वस्य बाधप्रमाविरहनिश्चयेऽपि अन्यस्यान्यबाधकमस्ति नवेति निश्चेतुमशक्यत्वात् । डिम्भविशेषणे तु निश्चयापेक्षा योग्यता । सन्देहेऽपि शब्दान्वयबोधजननात् । शब्दप्रमाणे तु योग्यतायां संशयसाधारणज्ञानस्य प्रयोगैकत्वात् । डिम्भे तु योग्यता निश्चितैव प्रयोजकमिति शब्दः पृथक् प्रमाणमिति ॥

जरत्प्राभाकरास्तु— वेदे शब्दः पृथक् प्रमाणं तत्र वक्तुरभावात् । लोके चाप्तोक्तत्वनिश्चये सति पदपक्षकार्थपक्षकानुमानाभ्यामेव संसर्गबोधोपपत्तौ लौकिकः शब्दोऽनुवादक इति मन्यन्ते । तन्न । नहीयमर्धजरती युक्ता । वेदे क्लृप्तसामग्रीतो लोकेऽपि संसर्गप्रत्ययसम्भवात् । अन्यथानुवादकतापि न स्यात् । तथाहि वैदिकवाक्यस्य पदार्था मिथस्संसर्गवन्तः योग्यतादिमत्पदसमूहस्मारितत्वाल्लौकिकवाक्यस्य पदार्थवत् । तथा च वैदिकशब्दानामप्यनुवादकत्वम् । इति साधु विचारितं वेदवाक्यमिति ॥

ननु शब्दस्याप्तोक्तत्वेन (न १)प्रामाण्ये स्वीक्रियमाणे वेदस्यापि पौरुषेयतया प्रामाण्यमङ्गीकार्यम् । तथा च 'रागद्वेषादिकालुष्यं पुरुषेषूप॰

लभ्यत' इति न्यायेनाप्रामाण्यं वेदस्य स्यादिति चेत् । मैवम् । लोके ह्याप्तो-ऽनाप्तश्चेति द्वैविध्यसम्भवादाप्तोक्तमेव प्रमाणम् अन्यदप्रमाणमिति विभागः सम्भवति । वेदे तु परमाप्तः परमेश्वर इति तत्प्रणीतं सर्वमेव वाक्यं प्रमाणमेव । आप्तोक्तत्वेन चागमस्य प्रामाण्यं, न तु नित्यनिर्दोषतया । शब्दस्य कार्यत्वेन नित्यत्वासम्भवात् । कार्यत्वस्य च सुखादिवदुत्कर्षापकर्ष-वत्त्वात् । उत्कर्षापकर्षयोश्च कार्यगतयोः कारणोत्कर्षाद्यनुविधायित्वात् । कारणाभावे कार्ये उत्कर्षादिर्नोपलभ्येतेति बाधकस्तर्क उन्नेयः । उत्कर्षा-दिमत्त्वं च शब्दे प्रत्यक्षम् । तकारोऽयं भकारो मन्दोऽयं भकार इति श्रूयमाणत्वात् । तस्मात् परमाप्तेन रागादिदोषरहितेन परमेश्वरेणोदितत्वात् प्रमाणमेव तज्जनितज्ञानस्यापि प्रामाण्यं परत एव । आप्तवाक्यजत्वस्यैव गुणस्य जनकत्वात् । न तु स्वतः । नित्यवेदजनितत्वस्यासम्भवात् । तस्मात् पौरुषेयसङ्केतबलेनार्थे शब्दः प्रमाणमिति सिद्धम् ॥

ननु कथं शब्दस्यार्थेन सङ्केतग्रहः । अभिहितान्वयबलादिति नैयायिका वैशेषिका भाट्टाश्च मन्यन्ते । पदैरभिहितानां पदार्थानामाकाङ्-क्षादिबलेनान्वयो ह्यभिहितान्वयः । पदार्थश्च नैयायिकवैशेषिकयोर्जाति-विशिष्टा व्यक्तिः, यथासम्भवमाकृतिश्च । तत्र विशिष्टेऽर्थे उपदेशाद्वा वृद्ध-व्यवहाराद्वा अस्य शब्दस्यायमर्थ इति सङ्केतः । स चेच्छाविशेषः । अनादि-प्रवाहपतितेषु ईश्वरसङ्केतः । चैत्राद्याधुनिकपदेषु आधुनिकपुरुषकृतसङ्केतः । वृद्धव्यवहारस्त्वेवम् — उत्तमवृद्धप्रयुक्तवाक्यं श्रुत्वा मध्यमवृद्धः प्रवर्तते । तद्व्यवहारं दृष्ट्वा बालो व्युत्पद्यते । यथा गामभ्याज देवदत्त दण्डेन वनादिहेति श्रुत्वा व्युत्पन्नः प्रवर्तते आनयति च । तत्प्रवृत्तिं दृष्ट्वा बालोऽनुमिनोति । विमता चेष्टा प्रयत्नजन्या चेष्टात्वात्, मदीयचेष्टावत् । स च प्रयत्नश्चिकीर्षाजन्यः यत्नविशेषत्वान्मम चिकीर्षाजन्ययत्नवत् । चिकीर्षा चेष्टसाधनताज्ञानजन्या चिकीर्षात्वान्मदीयचिकीर्षावत् । इष्टसाध-नताज्ञानं च उत्तमवृद्धप्रयुक्तवाक्यजन्यम् । तदन्वयव्यतिरेकानुविधायित्वात् । यद्यदन्वयव्यतिरेकानुविधायि तत्तज्जन्यम् । यथा तन्त्वन्वयव्यतिरेकानु-विधायी पटस्तन्तुजन्यः । ततश्चोत्तमवृद्धवाक्यान्मध्यमवृद्धस्य गवानयन-ज्ञानमिति निश्चिनोति बालः । पश्चादावापोद्वापाभ्यां गां बधान गां मुञ्चेति

रूपाभ्यां गोपदस्य जातियुक्तं पिण्डमेवार्थं निश्चिनोति । गोपदस्यानयनबन्धनमोचनादौ अनुगतत्वात् । क्रियापदानां चावापोद्धारादिना तत्तदर्थं जानाति । एवं व्यवहारात् पदार्थमवगत्य पदार्थानां योग्यतादिवशादन्वयं प्रतिपद्यते । तत्र पदानां ज्ञानं कारणम् । पदार्थस्मृतिरवान्तरव्यापारः । अर्थसंसर्गज्ञानं फलम् । संसर्गे च पदानां न शक्तिः, नापि लक्षणा । ताभ्यां विनैवाकाङ्क्षादिसंसर्गबोधसम्भवात् । अनन्यलभ्यः श दार्थ इति न्यायेन गत्यन्तराभावे शक्त्यादिकल्पनात् । अत्र चाकाङ्क्षादिरेव गत्यन्तरमस्ति । वाक्यार्थः संसर्ग एव न तु संसृष्टः । तदा अर्थवत्त्वं संसर्गेऽपि पदानां शक्तिकल्पनागौरवापत्तेः । संसर्गो यदा यस्येष्टसाधनं तदा तस्य तज्ज्ञानात् प्रवृत्तिः । यदा सोऽनिष्टसाधनं तदा निवर्तते ॥

भाट्टानां तु सङ्केतग्रहप्रकारः समान एव । पदार्थस्तु गवादिपदानां गोत्वादिजातिः । व्यक्तिराक्षेपाल्लभ्यते । लक्षणया वा । जातेरानयना(द्यु?द्य)नुपपत्तेः । तेषां मते पादार्थः करणम् । तत्स्मरणमवान्तरव्यापारः । संसर्गज्ञानं फलम् । वेदान्तिनां प्राभाकराणां चान्विताभिधानबलात् सङ्केतग्रहः । योग्येनेतरेण क्रियार्थेनान्विते स्वार्थे कारकपदस्य सङ्केतग्रहः । कारकार्थान्विते स्वार्थे क्रियापदस्य सङ्केतग्रहः । एतदन्विताभिधानं वेदान्तिनाम् ॥

प्राभाकराणां तु कार्यान्विते स्वार्थे सकलपदानां सङ्केतग्रहः । कार्यं लिङ्लोट्तव्यप्रत्ययादि वाच्यम् । गामानयेत्युक्ते गोपदस्यानयनान्विते गोपिण्डे सङ्केतः शक्तिरूपः । आनयनपदस्य गोपिण्डान्विते । ननु स्वकार्यपदस्य कार्यान्वितत्वं नास्तीति सकलपदानां कथं कार्यान्विते शक्तिरिति चेत् । मैवम् । कार्यान्वयान्वयिनि हि शक्तिः । अन्वयस्योभयनिष्ठत्वात् कार्यान्वयं प्रत्यन्वयित्वं कार्यस्येतरस्य चोभयोरप्यस्ति इति नोक्तदोषः । न च गोपदेनैवानयनान्वितकथने आनयनस्यापि कथनात् आनयनपदं व्यर्थम् । आनयनपदे च कारकान्वितक्रियाबोधनात् कारकपदप्रयोगो व्यर्थः । ततश्चैकस्मिन् वाक्ये एकेनैव सर्वपदार्थस्याभिधानादितरपदवैयर्थ्यमिति वाच्यम् । अन्वयसामान्यस्यैकेन कथनेऽपि क्रियाकारकविशेषबोधनायेतरपदाकाङ्क्षणात् । ततश्च प्राभाकरमते क्रियासामान्यान्वयः पदशक्तिगोचरत्वात् पदार्थः । आनयनादिक्रियाविशेषान्वयस्तु वाक्यार्थः ॥

वेदान्तिनां तु मते योग्येतरमात्रान्वयः पदार्थः । योग्यविशेषान्वयस्तु वाक्यार्थः ॥

गुरुमते पुरुषप्रवर्तकं कार्यज्ञानम् । कार्यं ममेदं कर्तव्यमित्येवंरूपम् । वेदे तु यागादिजन्यमपूर्वरूपम् । तच्च 'कृत्युद्देश्यं प्रधानं यत्तत्कार्यमभिधीयते' इति शालिकनाथेन लक्षितम् । कृत्या प्रयत्नेन उद्देश्यत्वं स्वर्गादेरप्यस्तीति प्रधानमिति विशेषणम् । प्रधानत्वं यागादेधात्वर्थस्याप्यस्तीति कृत्युद्देश्यत्वविशेषणम् । तस्य क्लेशरूपत्वेनोद्देश्यत्वाभावात् । तस्मात् कार्यताज्ञानं प्रवर्तकम् । गुरुमते तु पदार्थो जातिर्व्यक्तिरपि । तत्र जातौ शक्तिः पदानां ज्ञाता उपयुज्यते । व्यक्तौ तु सा स्वरूपसती । यतो जातावेवानुगतरूपायां शक्तिर्गृह्यते, अतः सैव स्मर्यते पदश्रवणे । व्यक्तिस्तु जात्याश्रयतया जातिशक्त्यैव गृह्यत इति । इति तु जातिशक्तिवादः प्राभाकराणाम् ॥

तार्किकाणां वेदान्तिनां चेष्टसाधनताज्ञानं प्रवर्तकम् । कार्यताज्ञानेऽपि इष्टसाधनताज्ञानं कारणम् । अन्यथा अनिष्टसाधनेऽपि कर्तुं शक्यत्वेन कार्यतास्ति । तज्ज्ञानादपि प्रवृत्तिप्रसङ्गात् । ननु तवापि तर्हि तक्षकचूडामण्यादाविष्टसाधने प्रवृत्तिप्रसङ्गादिति चेत् । मैवम् । इष्टसाधनताज्ञाने कृतिसाध्यत्वम(प्य ? पि) विषयः । तथाच कृतिसाध्येष्टसाधनताज्ञानं प्रवर्तकम् । तक्षकमस्तकरत्नादौ प्रयत्नेन साधयितुमशक्यत्वात् विशिष्टेष्टसाधनताज्ञानं नास्ति इति न प्रवृत्तिः । इष्टं च बलवदनिष्टाननुबन्धि वाच्यम् । तेन मधुविषसम्पृक्तान्ने तृप्तिसाधनेऽपि न प्रवृत्तिः । तस्य मरणसाधनत्वेन बलवदनिष्टानुबन्धित्वात् । किञ्चिदनिष्टानुबन्धित्वमग्निहोत्रादावप्यस्ति, तस्यापि वित्तव्ययायाससाध्यत्वात् । तथापि स बलवान्न भवति । ततोऽपि बलवदिष्टं स्वर्गादिफलम् । ततश्च बलवदनिष्टा(न)नुबन्धीष्टं फलम् । कृतिसाध्यत्वे सति यत्तत्साधनं तज्ज्ञानं प्रवर्तकमिति सिद्धम् । तस्मादाप्तवाक्यमापि प्रमाणम् । तथा च प्रमाणचतुष्टयं गौतमीये मते । अर्थापत्त्यादीनामत्रैवान्तर्भावः । स वैशेषिकमते निरूपित एव ॥

इति प्रमाणपदार्थः ॥

———

अथ प्रमेयपदार्थो निरूप्यते —

अस्य प्रमाणानन्तर्यं युक्तम् । किं पुनरेभिः प्रमाणैः प्रमातव्यमित्यपेक्षायां प्रमेयस्योपस्थितत्वात् । तत्र सूत्रम् —

"आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" इति । साक्षान्मोक्षोपयोगिज्ञानविषयत्वेन मुमुक्षुभिः प्रकर्षेण ज्ञेयं प्रमेयम् । किमुक्तं भवति । यद्विषयं मिथ्याज्ञानं संसारमातनोति तद्विषयं तत्त्वज्ञानं तन्निवर्तयति ॥

तत्र चेतन आत्मा । चैतन्यात्यन्ताभावानधिकरणत्वस्य लक्षणत्वात् नामुक्तमूर्छितसुषुप्तादावव्याप्तिः । शरीरा(दिना ? दीनां)जडत्वान्नातिव्याप्तिः । तस्य विभुत्वादिकं पूर्वमेव निरूपितम् । तत एवावधेयम् ॥

अ(त्यन्ता ? न्त्या)वयवि चेष्टाश्रयः शरीरम् । चेष्टा नाम प्रयत्नवदात्ममनस्संयोगासमवायिकारणिका क्रिया । ततश्चानलानिलक्रियायां नातिव्याप्तिः । तस्याश्चादृष्टवदात्मसंयोगजन्यत्वात् । तदुक्तम् — अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कार्यमित्येतान्यदृष्टकारितानी(?)ति । अन्त्यावयवीति करचरणादिष्वुदासः । कार्यद्रव्यानारम्भ(कः ? कं) कार्यद्रव्यमन्त्यावयवि ॥

शरीरसंयोगे सत्येव साक्षात् प्र(मि)तिसाधनमिन्द्रियम् । शरीरसंयोगे इति विशेषणेनेन्द्रियार्थसन्निकर्षनिरासः । एवेत्यालोकादयो निवर्त्यन्ते । साक्षादिति शरीरयोगीनि चेष्टादीनि लिङ्गानि । प्रमितीत्यप्रमाहेतवो दोषाः । साधनमिति चेन्द्रियसंस्कारा अञ्जनादयः । तेषां साधनानुग्राहकत्वेन स्वयमसाधनत्वात् । साक्षात्त्वं तु ज्ञानत्वावान्तरजातिभेदः । ज्ञानकरणकज्ञानावृत्तीन्द्रियजन्यज्ञानवृत्तिजातिस्साक्षात्त्वम् । ननु साधनपदेन कारणत्वं वा विवक्षितं करणत्वं वा । आद्ये दिक्कालयोरतिव्याप्तिः । तयोरपि शरीरसंयोगे सत्येव साक्षात्प्रमितिकारणत्वात् । द्वितीये त्वव्याप्तिः । इन्द्रियसन्निकर्षस्यैव करणत्वेनेन्द्रियस्याकरणत्वादिति चेत् । न । इन्द्रि(यं ? य)विशिष्टस्य करणत्वं विशेषणस्यापि तथात्वान्नासम्भवः । दिक्कालयोः कारणत्वे वा शरीरसंयोगापेक्षानियमाभावात् तयोः साधारणत्वात् । अतो न कश्चिद् दोषः ॥

इन्द्रियग्राह्या अर्थाः । ते च द्रव्ये पृथिव्यादिचतुष्टयम् आत्मा च । धर्माधर्मसंस्कारगुरुत्वव्यतिरिक्ताः विंशतिर्गुणाः । पञ्च कर्माणि । सामान्यं समवायोऽभावश्च । ते च पूर्वमेव निरूपिताः ॥

अर्थप्रकाशो बुद्धिः । सा चात्मगुणः मानसप्रत्यक्षा, नतु स्वप्रकाशा प्राभाकरवत् । यद् वस्तु तद् वेद्यं घटवद् इति नियमेन तदसम्भवात् । नापि बौद्धवत् स्वात्मानं स्वयमेव विषयीकरोति । स्वप्रकाशात् कर्मकर्तृविरोधात् परवेद्यत्वनियमाच्च । विमतं परवेद्यं क्षणिकात्म-विशेषगुणत्वात् सुखवत् । तस्मात् परप्रकाश्या बुद्धिः । नापि भाट्टवदतीन्द्रिया । तत्र प्रमाणाभावात् । न प्राकट्यं प्रमाणम् । विषयविषयिभावव्यतिरेकेण तत्सद्भावे प्रमाणाभावात् । अन्यथा अतीतादौ प्राकट्याभावेन विषयत्वानुपपत्तेः । ज्ञानस्यातीन्द्रियत्वे घटमनु-भवामीति अध्यक्षविरोधात् । ज्ञानमतीन्द्रियम् । इन्द्रियाविषयत्वादिति साध्यसमो हेतुः । तस्माद् बुद्धिर्मानसप्रत्यक्षा क्षणिकविशेषगुणत्वात् सुख-वदिति ॥

सुखाद्यपरोक्षसाधनमिन्द्रियं मनः । तस्याणुत्वं प्रागेव प्रासाधि । युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति ॥

वाङ्मनश्शरीराणां पुण्यापुण्यरूपो व्यापारः प्रवृत्तिः । यदि सत्कर्म करोति वागादिभिस्तर्हि पुण्येन पुण्यलोकं प्राप्नोति । यद्यसत्कर्म करोति तर्हि नरकेन पापेन नरकादिदुःखमनुभवति सा प्रवृत्तिः । प्रवृत्तिहेतवो दोषाः । ते च रागद्वेषमोहाः । राग इच्छा । द्वेषो मन्युः । तौ तु साक्षात् पुरुषं प्रवर्तयतः । मिथ्याध्यवसायो मोहः । स च रागद्वेषानुग्राहकतया प्रवृत्तिहेतुः । मूढमेव हि रागद्वेषौ प्रवर्तयतः ॥

मृत्वोत्पत्तिः प्रेत्यभावः । मरणोत्पत्ती तु देहविश्लेषसंश्लेषौ । नि-त्यस्यात्मनो जननमरणासम्भवात् । नित्यत्वं च पूर्वमेव प्रत्यपादि ॥

प्रवृत्तिसाध्यं फलम् । तच्च देहेन्द्रियादिसुखादिकम् । प्रवृत्तिश्च पु-ण्यापुण्यमयी क्रियेत्युक्तम् । प्रतिकूलतया वेद्यं दुःखम् । तदपि देहेन्द्रिया-दिकमेव । धर्मसाध्यं पुण्यदेहादि, अधर्मसाध्यं पापदेहादि इति भेदः । तच्चैकविंशतिप्रकारं पूर्वं निरूपितम् ॥

एतस्य दुःखस्यात्यन्तिकनिवृत्तिरपवर्गः । आत्यन्तिकत्वं नाम निवृत्तसजातीयस्य तत्रैवात्मनि पुनरनुत्पादः ॥

एतत्प्रमेयं मोक्षे साक्षादङ्गम् । द्रव्यादि तु न साक्षान्निःश्रेयसोपयोगीति गौतमो न लक्षयाञ्चक्रे इति ॥

अथ संशयः । अनवधारणात्मकः प्रत्ययः संशयः । स च त्रिविधः । समानधर्मासाधारणधर्मविप्रतिपत्तिभेदात् । स निरूपित एव । उपलब्ध्यनुपलब्ध्योस्तु न पृथक् संशयहेतुत्वम् । किन्तु समानधर्मत्वेनैव इति वार्त्तिककाराः । तथाहि — पूर्वं सदेव किञ्चित् केनचिद्व्यापारेणाभिव्यक्तं सदुपलभ्यते, यथा प्रदीपेन घटः । किञ्चिच्चासदेव जातमुपलभ्यते । यथा कुलालव्यापारेण घटः । तथा च सदसतोः साधारणोपलब्धिधर्मेण संशयः । अनुपलब्धिश्च सतां परमाणूनां भवति । असतां शशशृङ्गादीनां च भवति । ततस्तत्राप्यनुलब्ध्या समानधर्मेण संशयः । अतस्त्रिविध एव संशयः ॥

यदुद्दिश्य पुरुषप्रवृत्तिस्तत् प्रयोजनम् । तच्च सुखतत्साधनादिकम् ॥

व्याप्तिसंवेदनस्थानं दृष्टान्तः । स साधर्म्यवैधर्म्यभेदाद् द्विविधः । साधनप्रयुक्तसाध्यधर्मवान् साधर्म्यदृष्टान्तः । साध्यधर्मनिवृत्तिप्रयुक्तसाधननिवृत्तिमान् वैधर्म्यदृष्टान्तः । यथा वह्निमत्त्वसाधने महानसमहाह्रदौ । सर्वेषां साध्यसाधनादिमत्त्वसम्प्रतिपत्तिस्थानं दृष्टान्त इति निष्कृष्टार्थः ॥

आभिमानिकसिद्धिभिः प्रमाणैरभ्युपेतोऽर्थः सिद्धान्तः । वादिनां यत्र प्रमाणमित्यभिमानः स सिद्धान्त इति यावत् । अन्यथा एकस्मिन् शब्दे कस्यचिदनित्यत्वं सिद्धान्तः । कस्यचिन्नित्यत्वम् । तदुभयमेकत्र न प्रामाणिकं वस्तुतः सम्भवति । वस्तुनो विरुद्धधर्मद्वयासम्भवात् । अतोऽभिमान एव मूलमिति ॥

स चतुर्विधः । सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तभेदात् ।

सर्वतन्त्रेष्वविरुद्धः स्वतन्त्रे चाङ्गीकृतः स सर्वतन्त्रसिद्धान्तः । यथा — मानाधीना मेयसिद्धिरिति ॥

योऽर्थः स्वशास्त्र एव सिद्धः परशास्त्रेण निवारितः स प्रतितन्त्रसिद्धान्तः । यथा न्यायशास्त्रे ईश्वरस्य प्रमाणत्वम् ॥

अनुमेयानुपक्तोऽधिकरणसिद्धान्तः । यथा क्षित्यादेः कर्तृमत्त्वे साधिते ईश्वरस्य सिद्धिः । क्षित्याद्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमतः कर्तुः सिद्धौ ईश्वर एव सिध्यति । अन्यस्य तादृशस्यासम्भवात् ॥

यः परतन्त्रे साधितः स्वतन्त्रे चाङ्गीक्रियते सोऽभ्युपगमसिद्धान्तः । यद्वा, अन्यत्र साधितस्य विशेषपरीक्षाभ्युपगमः । यथा काणादतन्त्रे साधितस्य मनसः इन्द्रियत्वपरीक्षणं गौतमीये ॥

परार्थानुमानवाक्यैकदेशा अवयवाः । ते च निरूपिताः ।

ननूपनयनिगमनयोः कृतकार्यत्वादानर्थक्यमिति चेत् । न । व्याप्तिमत्तया प्रतिसन्धीयमानस्य लिङ्गस्यानुमानत्वात् । उपनयाधीनत्वाच्च तत्प्रतिसन्धानस्य । प्रसिद्धाविनाभावस्य साधनस्य पक्षधर्मताप्रतिपादनेन स्वरूपासिद्ध्यन्यथासिद्धिनिरासेनापि प्रयोजनवत्त्वादुपनयस्य नानर्थक्यम् । निगमनेऽपि हेत्वनुवादाङ्गस्य तस्मादेवानित्यो नान्यस्मादिति सिद्धसाधनतानिरासेन प्रयोजनवत्त्वात् । पक्षानुवादस्य चानित्य एवायं न नित्य इति नियमेन बाधकप्रतिरोधयोर्निरासेन प्रयोजनवत्त्वाच्च नानर्थक्यम् ॥

केचन जरन्नैयायिकास्तु, जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशय निरासैः सह दशावयवा इत्याचक्षते । तन्न । परप्रतिपादकस्य वाक्यस्यार्थं यान्यवान्तरवाक्यानि संहत्य निष्पादयन्ति, तानि ह्यवयवाः । जिज्ञासादयस्तु परप्रतिपादनानङ्गत्वान्न साधनवाक्यैकदेशतयावयवत्वं लभन्ते । तस्मात् सुष्ठूक्तं पञ्चावयवा इति । अत एवाह भगवान् व्यासो महाभारते —

"पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित् ।"

इति ।

अनिष्टप्रसञ्जनं तर्कः । अनिष्टं च द्विधा । प्रामाणिकपरित्यागोऽप्रामाणिकस्वीकारश्चेति । यद्युदकं पिपासां न शमयेत् पिपासुना न पीयेत इति प्रामाणिकपरित्यागः । यद्युदकं पीतं परमन्तरधक्ष्यत् तर्हि तदवशिष्टं मामपि दहेद् इत्यप्रामाणिकस्वीकारः । अन्ये च चत्वारस्तर्कभेदाः । आत्माश्रयान्योन्याश्रयचक्रकानवस्थाभेदात् । एते स्वरूपासिद्धिहेतवो भवन्ति । अनिष्टप्रसङ्गस्त्वन्यथासिद्धिहेतुः । तर्कस्याङ्गानि पञ्च भवन्ति । व्याप्तिस्तर्काप्रति-

हतिर्विपर्यये पर्यवसानम् अनिष्टत्वम(न)नुकूलत्वञ्चेति । प्रसञ्जकस्याहार्य-लिङ्गस्य प्रसञ्जनीयेन व्याप्तिः । यथा यद्यग्निर्न स्यात् तर्हि धूमोऽपि न स्याद् इति वह्न्यभावधूमाभावयोर्व्याप्तिः । प्रतिकूलतर्कैरप्रतिघातः (तर्काप्रतिहतिः)। प्रसञ्जनीयस्य विपर्यये पर्यवसानं (विपर्यये पर्यवसानम्) । दृश्यते च धूमः, इति । प्रसञ्जनीयस्यानिष्टत्वं द्विविधमुक्तमेव । अननुकूलत्वं प्रसङ्गस्य विरुद्ध-हेत्वाभासवत् प्रतिपक्षासाधकत्वम् । अन्यतमाङ्गाभावे तर्काभासो भवति । अस्य तर्कस्याज्ञाततत्त्वोऽर्थो विषयः । आरोपितं लिङ्गं कारणम् । तत्त्वार्थ-निर्णयः फलम् । 'सन्दिग्धे न्यायः प्रवर्तते' इति न्यायात् संशयविषय एव तर्कस्य विषयः । सतामेवाग्न्यादीनामसत्त्वादारोपितलिङ्गत्वं प्रमाणा-ङ्गस्य तर्कस्य प्रधानप्रमाणफलत्वेनैव फलत्वात् तत्त्वनिर्णय एव फलम् । अङ्गानां प्रधानफलत्वेनैव फलवत्त्वस्य दर्शपूर्णमासाद्यङ्गेषु प्रयाजादिषु स्थितत्वात् । प्रत्यक्षादेः प्रमाणस्य तर्कोऽनुग्राहकः । नतु स्वतः तत्त्व-निर्णयाय प्रभवति । अनिष्टप्रसञ्जनमात्ररूपत्वात् । तदुक्तं —

"नहि तत्करणं लोके वेदे वा किञ्चिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥"

इति । प्रमाणविषये तद्विपर्ययशङ्कानिरसनं तर्ककृतोऽनुग्रहः । अनुमाने तु पक्ष एव विपक्षजिज्ञासायामग्निमान् भूदित्येवंरूपायां ज्ञातायां यद्यग्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति तर्केण व्यभिचारशङ्का निवर्त्यते । पक्षे साध्याभावे हेतोर्वृत्तौ व्यभिचारः । तत्र हेतुरेव न स्यादिति कथिते तत्प-रिहारः ॥

तर्कस्यापि व्याप्तिमूलत्वात् तत्र तत्र तर्कापेक्षायाम् अनवस्थेति चेद्, न । कियद्दूरं गत्वापि तत्र स्वव्याघातादिना शङ्का स्वयमेव निवर्तते । अन्ते गत्वा अकारणकार्योत्पत्तिः स्यादित्युक्ते तथा नाम भवेदित्यपि शङ्का नोदयमासादयति । एवं वदन् कार्यार्थी कारणे प्रवर्तत इति स्वव्याघातः प्रसज्येत । एवमन्यत्रापि तर्कानुग्रह ऊहनीयः ॥

प्रमाणतर्काभ्यां विचारसाध्योऽर्थनिश्चयो निर्णय इति ॥

अथ कथा । विचारगोचरार्थविषयो नानावक्तृको वाक्यविस्तरः कथा । सा च वादजल्पवितण्डाभेदेन त्रिधा । तत्र प्रमाणतर्काभ्यां साधनो-पालम्भाभिमानो यत्र स वादः । सा वीतरागकथेत्युच्यते । अत्र तत्त्वनिर्णय-

फलकत्वात् वीतरागाणामेव गुरुशिष्यसब्रह्मचारिणामधिकारः । न विजिगीषूणाम् । अज्ञातज्ञानं ज्ञातस्य स्थिरीकरणं संशयनिवर्तनमिति त्रिविधस्तत्त्वनिर्णयः । स्वपक्षसाधनं परपक्षदूषणं साधनसमर्थनं दूषणसमर्थनम् अपशब्दवर्जनञ्चेति पञ्चावयवा अस्य ॥

स एव वादः यदा छलजातिनिग्रहसहितः तदा जल्पः । स एव स्वपक्षसाधनरहितः परपक्षमात्रदूषणरूपश्चेद् वितण्डा । तयोर्विजयः फलम् । तयोर्विजिगीषुकथेत्यपि संज्ञा । वितण्डायामपि यः तद्वस्तु(?)सिद्धान्तोऽङ्गीकर्तव्यः । अन्यथा एकस्मिन् सिद्धान्ते दूषिते अन्यसिद्धान्तावलम्बनेन प्रत्यवस्थाने कृते शाखाचङ्क्रमणेन कथापर्यवसानं न स्यात् ॥

'न विगृह्य कथां कुर्यादि'ति जल्पवितण्डयोर्निषेधः श्रूयत इति चेद् । न । निषेधस्य नास्तिकव्यतिरिक्तविषयत्वात् । तदुक्तं — तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे कर्तव्ये बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदिति । 'ताभ्यां विगृह्य कथनमि'ति च ॥

अथ हेत्वाभासाः । सद्धेतूक्तचतुःपञ्चरूपेषु अन्यतमविकलाः कैश्चिद्रूपैरन्विता हेत्वाभासाः । ते चासिद्धादयः पूर्वमेव निरूपिताः तत एवावधार्याः ॥

अथ छलम् । अर्थान्तरविवक्षया वाक्यप्रयोगे वक्तुरनभिप्रेतमेवार्थान्तरं तदर्थत्वेनारोप्य तदर्थदूषणं छलम् । अर्थश्चाभिधेयः औपचारिकः तात्पर्यविषयश्चेति त्रिधा । छलं त्रिविधम् । वाक्छलमुपचारच्छलं सामान्यच्छलञ्चेति । अभिधेयान्तरमभिप्रेत्य प्रयुक्तस्य शब्दस्य अभिधेयान्तरकल्पनया तन्निषेधो वाक्छलम् । यथा आढ्योऽयं नवकम्बलत्वादिति नूतनाभिप्रायेण प्रयुक्ते सङ्ख्याभिप्रायेण असिद्धो हेतुरिति । उपचारप्रयोगे मुख्यार्थकल्पनया दूषणमुपचारच्छलम् । शक्त्या वाच्योऽर्थो मुख्यः । तदन्य उपचारः । स द्विविधः लक्षणागुणभेदात् । मुख्यार्थानुपपत्त्या तदविनाभूतेऽर्थे प्रतीतिर्लक्षणा । यथा गङ्गायां घोष इत्युक्ते प्रवाहे गृहस्यानुपपत्त्या तीरे तत्सम्बन्धप्रतीतिः । इयं जहल्लक्षणा प्रवाहार्थपरित्यागात् । कुन्ताः प्रविशन्तीत्यत्र कुन्तधरेषु अजहल्लक्षणा । कुन्तार्थापरित्यागेन कुन्तविशिष्टपुरुषेषु प्रवृत्तेः । सिंहो माणवक इति गौणः । सिंहगतक्रौर्यादि गुणयोगात् पदप्रवृत्तेः । तत्रोपचारे मुख्यकल्पनया दूषणमुपचारच्छलम् ।

यथा मञ्चाः क्रोशन्तीत्युक्ते छलवाद्याह पुरुषाः क्रोशन्ति न मञ्चाः । गङ्गायां घोषः कथं, कुन्तानामचेतनानां प्रवेशनं कथं, सिंहश्च कथं देवदत्तः इति दूषणमुपचारच्छलम् । तात्पर्यार्थवैपरीत्यकल्पनया दूषणं सामान्यच्छलम् । अहो ब्राह्मणश्चतुर्वेदाभिज्ञ इत्युक्तो किमत्राश्चर्यं ब्राह्मणे चतुर्वेदाभिज्ञत्वमिति सम्भावनाभिप्रायेण केनचिदुक्ते ब्राह्मणत्वस्य हेतुत्वे तात्पर्यं कल्पयित्वा छलवाद्याह — न, व्रात्येनानेकान्तात् इति । त्रयाणामपि द्वितीयादिकक्ष्यासु सम्भवात् तदुत्तरकक्ष्योद्भाव्यमिति ॥

अथ जातिः । स्थापनाहेतुप्रयोगे यदुत्तरं दूषणासमर्थं सा जातिः । स्वव्याघातकमुत्तरं वा जातिः । सा चतुर्विंशतिप्रकारा संक्षेपतः सूत्रोक्ता । "साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिप्रकरणसंशयाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमा" इति । द्वन्द्वान्ते श्रूयमाणत्वात् समशब्दस्य प्रत्येकं सम्बन्धः । साधर्म्यसमा वैधर्म्यसमेत्यादि द्रष्टव्यम् । केचित्तु साधर्म्यवैधर्म्यसमयोः साधारणां प्रतिधर्मसमां जातिं लक्षयन्ति । येन केनचित् प्रमाणेन वादिना साध्योपसंहारे कृते व्याप्त्याद्यपेक्षिताङ्गरहितेन प्रमाणेन प्रतिरोधतः प्रत्यवस्थानं प्रतिधर्मसमः । निषेधापेक्षया पुल्लिङ्गनिर्देशः । जात्यपेक्षया च स्त्रीलिङ्गनिर्देशोऽपि भवति । नन्वयं प्रकरणसमहेत्वाभास एव स्यान्न जातिरिति चेद् । न । तत्र व्याप्त्यादिसत्त्वाभिमानोऽस्ति । अत्र सोऽपि नास्तीति भेदः । तर्हि प्रकरणसमजातेरस्य च को विशेषः । अयं विशेषः । अत्र प्रतिरोधेन प्रत्यवस्थानं, तत्र बाधेन प्रत्यवस्थानमिति । व्याप्त्यादियुक्ताङ्गहीनेन साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः । अनित्यः शब्दः कृतकत्वादिति प्रयोगे साधर्म्येण वैधर्म्येण उभाभ्यां वा उपसंहारे कृते, नैतदेवं यद्यनित्यघटसाधर्म्यादनित्यः शब्दः तर्ह्याकाशसाधर्म्यादमूर्तत्वान्नित्योऽपि किन्न स्यादिति । नचेदेवम् अनित्योऽपि तर्हि न स्यात् अविशेषादिति साधर्म्यसमः । यथा वैधर्म्येणोपसंहारे कृते, यद्याकाशवैधर्म्यात् कृतकत्वादनित्यः शब्दः तर्हि घटवैधर्म्याच्छ्रावणत्वान्नित्यः किं न स्यादिति वैधर्म्यसमः । समुच्चिताभ्यां प्रत्यवस्थानमुदाहरणीयम् । अनुमानेनोपसंहारे कृते प्रत्यक्षेण प्रत्यवस्थानम् । यद्यनुमानेनानित्यः शब्दः, स एवायमिति प्रत्यभिज्ञया नित्यः किन्न स्यादिति ॥

सर्वासां जातीनां सप्ताङ्गानि —

"लक्ष्यं लक्षणमुत्थानं पातनावसरौ फलम् ।
मूलमित्येवमेतासां सप्ताङ्गानि विदुर्बुधाः ॥"

अत्र लक्ष्यं प्रतिधर्मसमः । तद्भेदेन च साधर्म्यवैधर्म्यसमौ । लक्षणं तूक्तमेव । प्रतिरोधेन प्रत्यवस्थानं पातनं नाम । क्वचिद्धेत्वाभासे स्थापनम् । तदत्र सत्प्रतिपक्षत्वमतद्भ्रान्तिः फलम् । उत्थानबीजं नाम जातिप्रयोगहेतुः । तदत्र युक्ताङ्गहीनप्रतिप्रमाणोपलम्भः । प्रमादः प्रतिभाक्षयश्चावसरः । अनवधानतो वा जातिप्रयोगो भवति । उत्तरापरिस्फूर्तौ वा यदासदुत्तरान्न परिस्फुरति तदा निग्रहस्थानं प्राप्तमेव । ततश्चासदुत्तरेणापि मम कदाचिद्विजयो भविष्यतीति मत्वा जात्युत्तरं प्रयुङ्क्ते । ततश्च प्रमादः प्रतिभाहानिश्चावसरः । मूलं नाम जात्युद्धारमूलं दुष्टत्वम् । (मूलमित्युच्यते?)। तच्च दुष्टत्वमूलं द्विविधम् । साधारणमसाधारणञ्चेति । साधारणं दुष्टत्वमूलं सर्वेषां जातिभेदानां स्वव्याघातकत्वम् । असाधारणञ्च त्रिविधम् । युक्ताङ्गहानित्वमयुक्ताङ्गाधिकत्वमविषयवृत्तित्वञ्चेति । साधारणं तावदेवम् — अयं स्थापनाहेतुर्न स्वसाध्यसाधकः अनङ्गीकृतयुक्ताङ्गेन प्रतिप्रमाणेन प्रतिरुद्धत्वादिति हि जात्यात्मकः प्रतिषेधहेतुः । स स्वात्मानमपि व्याहर(?)न्ति नेदं दूष्यदूषकम् । तथाविधप्रतिप्रमाणेन प्रतिरुद्धत्वादिति । असाधारणं तु युक्ताङ्गहानित्वम् । युक्ताङ्गस्य व्याप्त्यादेरनङ्गीकारात् । एवमुत्तरत्रापि दुष्टत्वमूलं द्रष्टव्यम् ।

कस्याप्यन्यासधर्मस्य वाद्युक्तसम्बन्धमात्रेण साध्यधर्मवद्दृष्टान्तपक्षे उत्कर्ष उत्कर्षसमः । यथा अनित्यः शब्दः कृतकत्वाद् घटवादित्युक्ते अनित्यत्वेनैव मूर्तत्वेनापि सहचरितं घटादावुपलब्धं कृतकत्वं शब्देऽपि मूर्तत्वं साधयेत् । नचेदेवमनित्यत्वमपि न साधयेद् अविशेषादिति । पक्षे अविद्यमानस्य दृष्टान्ते वादिहेतुसहचरितस्य धर्मस्य दर्शनमुत्थानबीजम् । लक्ष्यलक्षणे स्पष्टे । सर्वत्र विशेषविरुद्धत्वमारोप्यम् । पातनं दृष्टान्ते मूर्तत्वसहितानित्यत्वेन सहचारात् पक्षे च केवलानित्यत्वसहचाराद्विशेषविरोधः । कृतकत्वस्य तद्भ्रान्तिः फलम् । साधारणं दुष्टत्वमूलम् । नेदमसाधकम् । विरुद्धत्वात् । नित्यत्वसाधनकृतकत्ववद् इति । जात्युत्तरार्थत्वे

सति अत्रापि दृष्टान्तगतधर्मः पक्षे उत्कर्षणीयः । नित्यत्वसाधनकृतकत्वे तरसाधकत्वं दृष्टम् । शब्देऽपि नित्यत्वेतरानित्यत्वसाधकत्वं स्यादिति स्वव्याघातकत्वम् । असाधारणन्तु युक्ताङ्गहानिः ॥

दृष्टान्ते साध्यस्य हेतोर्वा व्यापकत्वेन किञ्चिद्धर्ममारोप्य पक्षे तन्निवृत्तेर्व्यापकाभावे व्याप्यस्याप्यभाव इति साध्यस्य हेतोर्वा पक्षादपकर्षणमपकर्षः । यथा कृतकत्वादनित्यत्वे साध्ये दृष्टान्ते कृतकत्वस्य नित्यत्वस्य वा मूर्तत्वं व्यापकम् । तच्च पक्षाद्व्यावर्तमानं कृतकत्वमनित्यत्वं वा व्यावर्तयेत् । तथा च हेत्वभावेऽसिद्धिः साध्याभावे व्यभिचारः । दृष्टान्ते व्यापकस्य पक्षेऽभावदर्शनमुत्थानहेतुः असिद्ध्यादिरारोप्यं तद्भ्रान्तिः फलम् । नेदमसाधकमसिद्धत्वादिति जातिवादिनोक्ते चाक्षुषत्वाद्यसिद्धौ दृष्टान्तिते तत्र घटत्वादिकं व्यापकं दृष्टम् । तच्च कृतकत्वाद्व्यावर्तमानं दूषकमपि व्यावर्तयेदिति ॥

पक्षे हेतोर्यादृशं रूपं विवक्षितं तद्रूपहेतुमत्तया सपक्षोऽपि साध्य इति प्रतिपादनं वर्ण्यसमः । सपक्षवर्तिनो हेतोर्यादृशं रूपं विवक्षितं तद्रूपहेतुमान् पक्षः साध्य इत्यवर्ण्यसमः जातिः । असिद्धिविषयत्वम् आरब्धसाध्यज्ञापनसामर्थ्यं व्याप्तिप्रमाणशून्यत्वं संशयसमानविषयत्वं स्वरूपभेदश्चेत्येतानि पक्षवर्तिहेतुरूपाणि पञ्च । तद्विपरीतानि पञ्च सपक्षवर्त्ति हेतुरूपाणि एतानि विपक्षे सपक्षे च व्यवस्थितानि । अन्यत्र तानि रूपाणि अन्यत्र साध्यानि इत्यापादने वर्ण्यावर्ण्यसमौ रूढौ ॥

हेतोः केनापि धर्मेण व्यभिचारदर्शनात् साध्येनापि व्यभिचारापादनं विकल्पसमः । यथा कृतकत्वस्य शब्दे विभागजत्वेन सह वर्तमानस्य व्यभिचारो दृष्टः । विभागजत्वं परित्यज्य घटे वर्तनात् । तथा घटे दृष्टेनानित्यत्वेनापि विना शब्दे वर्ततां को दोष इति । व्याघातस्तु दृष्टत्वे हेतुः । अव्याप्तेन व्यभिचारे व्याप्तेनापि न व्यभिचारः । तथात्वे तवापि दोषः समान इति ॥

प्रमाणान्तरसिद्धानामपि पक्षहेतुदृष्टान्तानां तेनैव हेतुना साध्यवत्साध्यत्वापादनं साध्यसमः । तेनैवेत्यनेन वर्ण्यसमातो भेदः । अत्रापि स्वव्याघातः समानः । अयुक्ताङ्गाधिकत्वं च । पक्षादीनां तेनैव हेतुना साध्यत्वस्यायुक्तत्वात् । आसामुद्धारसूत्रं 'किञ्चित्साधर्म्यादुपसंहारे वैधर्म्यादप्रति-

षेध' इति किञ्चित्साधर्म्याद्व्याप्तात् साध्योपसंहारे सिद्धे वैधर्म्याद् व्याप्ति-रहितादप्रतिषेध इति ॥

अप्राप्यसाधनेऽतिप्रसङ्गात् साध्यं प्राप्यहेतु साधक इति वक्तव्यम् । तथा च पूर्वमेवास्य सिद्धिर्वक्तव्येत्यापादनं प्राप्तिसमः । अविद्यमानस्य सम्बन्धायोगात् पूर्वमेव प्राप्तिर्वाच्या । तथाचोभयोस्समकालत्वात् किं कस्य साध्यं साधनं वेति, अत्र किं कस्य दूष्यं दूषणं वेति स्वव्याघातः ॥

प्राप्तिपक्षे अविशेषात् अप्राप्यसाधकत्वं वाच्यम् । तथा च सर्वं सर्वस्य साधकं स्यादिति प्रत्यवस्थानमप्राप्तिसमः । अत्रापि स्वव्याघातः स्पष्ट एव । उद्धारस्तु क्वचित् प्राप्यापि साधकत्वं दृष्टं यथा प्रदीपस्य । क्वचिदप्राप्यापि साधकत्वं दृष्टं यथाभिचाराच्छत्रुमारणे ॥

सिद्धे दृष्टान्तहेत्वादौ तत्र किं साधनं, तत्साधनेऽपि किं साधन-मित्यनवस्थाभासवचनं प्रसङ्गसमः । ज्ञप्तावप्येषा जातिः हेतौ किं प्रमाणमित्यादिरूपेणानवस्थाप्रसङ्गः । स्वव्याघातस्तु दोषः ॥

हेतुरङ्गं साध्यातिदेशे दृष्टान्त एवाङ्गमित्यभिमानेनोत्थानहेतुना प्रतिदृष्टान्तावष्टम्भेन बाधप्रतिरोधाभ्यामन्यतरेण प्रत्यवस्थानं प्रतिदृष्टान्त-समः । यथा घटदृष्टान्तेनानित्यश्शब्दः आकाशदृष्टान्तेन नित्यस्यैव सिद्धि-रिति बाधः । नित्यस्यापि सम्भवादिति प्रतिरोधः । दूषणस्यापि प्रति-दृष्टान्तसम्भवात् स्वव्याघातः ॥

साधनाङ्गानां धर्मिलिङ्गसाध्यदृष्टान्ततज्ज्ञानानामन्यतमस्योत्पत्तेः पूर्वहेतुवृत्तौ भावात् भागासिद्ध्या प्रत्यवस्थानम् अनुत्पत्तिसमः । तत्र धर्म्य-नुत्पत्तौ यथा — अनित्यः शब्दः कार्यत्वादित्युक्ते अनुत्पन्नस्यापि शब्दस्य पक्षत्वात् तस्य चेदानीमभावादाश्रयभागासिद्धो हेतुरिति । एवमन्यत्रापि द्रष्टव्यम् । उद्धारक्रमस्तूत्पन्नस्य शब्दादेः पक्षादिभावान्नाश्रयासिद्धिः । अनुत्पन्नस्यापि शब्दत्वात् कथं तद्व्यवच्छेद इति चेत् । तस्य तुच्छत्वेना-शब्दत्वात् । तथाचाविषयवृत्तित्वं दूषणस्य । उत्पन्नो हि शब्दादिस्तस्य विषयः अनुत्पन्नस्त्वविषय इति । स्वव्याघातः स्पष्ट एव । दूषणहेतोरपि पक्षादिसद्भावादिति ॥

निर्णयकारणे सत्यपि संशयहेतूनां समानधर्मादीनां सद्भावात् संश-यापादनेन प्रत्यवस्थानं संशयसमः । अनित्यः शब्दः कृतकत्वाद् घटवदिति

निर्णयप्रमाणोपन्यासे यदि निर्णायकसद्भावेन निर्णयः स्यात् तर्हि संशायकसद्भावेन संशयोऽपि स्यादविशेषात् । अस्ति च संशायकं नित्यानित्ययोः सामान्यघटयोरैन्द्रियकत्वं समानो धर्मः । स्वकारणसद्भावेऽपि संशयानुत्पत्तौ निर्णयो न स्यादविशेषात् । शुष्काङ्गहानिरत्र दुष्टत्वमूलम् । निर्णायकाभावविशिष्टस्य समानधर्मादेः संशयहेतुत्वमित्यनङ्गीकारात् । अन्यथा कदाचिदपि संशयोच्छेदो न स्यात् । स्वव्याघातस्तु दूषकतानिर्णयेऽपि सति दूषकतासंशयसद्भावात् संशयः स्यात् । इति ॥

अभ्युपगतानधिकबलेन प्रतिप्रमाणेन परकीयहेतोर्बाधा(दि?भि)मानेन प्रत्यवस्थानं प्रकरणसमः । यथा कृतकत्वेनानित्यत्वे साध्ये श्रावणत्वान्नित्य(त्व)स्यैव सिद्धिरिति प्रत्यभिज्ञाबाधितत्वादित्यादिप्रतिप्रमाणोपलम्भ उत्थानहेतुर्बाध आरोप्यः । दुष्टत्वमूलं तु स्वव्याघातः ॥

हेतुः साध्यात् पूर्वं पश्चाद्वा तेन सह वा उत्पन्नः सर्वथापि न सम्भवति । सहभावे विशेषाभावादहेतुः । पूर्वभावे किमपेक्ष्येदं साधनं, तदा साध्यस्य प्रतियोगिनोऽभावात् । पश्चाद्भावे पूर्वं साध्यस्य सिद्धस्य कथमिदं साधनमिति प्रत्यवस्थानं हेतुसमः । हेतुभङ्गो हेतुसमः इति निष्कर्षः । अत्र प्रतिकूलतर्क उत्थानबी(जा ? जम्) । अत्रापि स्वव्याघातो दूषणहेतोरपि समः । उद्धारस्तु ज्ञप्तिपक्षे त्रिकालेऽपि ज्ञानदर्शनादप्रतिषेधः । कृतिपक्षे तु पूर्वकालीनादेव हेतोः पश्चाद्भाविनः साध्यस्योत्पत्तेर्न त्रैकाल्यासिद्धिः । प्रतियोगिनः साध्यस्य भावेऽपि बुद्धिस्थत्वेन साधननिरूपकत्वसम्भवात् न स्वरूपसत्तामपेक्षते ॥

असत्यामेव व्याप्तौ वादिवचनसामर्थ्येनार्थाक्षिप्तमित्यभिमानादुक्तविपरीतमारोप्य प्रत्यवस्थानमर्थापत्तिसमः । यथा— अनित्यः शब्द इत्युक्ते अर्थादाक्षिप्तमन्यन्नित्यमिति । विशेषविधौ परिसंख्यान्यायेन शेषनिषेधस्य नान्तरीयकत्वात् । तथा च घटादेर्नित्यत्वात् साध्यविकलो दृष्टान्त इति विरोधः । अनित्यसाधर्म्यादनि(त्यो ? त्यत्वो)क्तौ अर्थान्नित्यसाधर्म्यान्नित्य इत्यापन्न इति प्रतिरोधः । अनुमानादनित्य इत्युक्ते अर्थादापन्नः प्रत्यक्षान्नित्य इति बाधः । एवमन्यदप्यूह्यम् । दुष्टत्वमूलं तु स्वव्याघातः । तस्मादिदं दूष्यमित्युक्ते एतदभावादिदमदूष्यमपीत्यापन्नमिति ॥

वादिसाधनव्यतिरिक्तेन केनचिद्धर्मेण स्थापनाहेतुप्रतिबन्धाभिप्रायेण प्रत्यवस्थानमविशेषसमः। यथा— यदि कृतकत्वेन घटशब्दयोरविशेष इष्यते, तर्हि सत्त्वादिना धर्मेण षण्णामप्यविशेषः किं न स्यात्। तत्र कल्पना— अविशेषे पक्षाद्यविभागप्रसङ्गः इत्यादि। अत्र सत्त्वादीनामव्याप्त्यभावान्नाविशेषापादक इति ॥

स्थापनानुमाने प्रयुक्ते त्वत्पक्षवन्मत्पक्षेऽपि किमपि प्रमाणं भविष्यतीति प्रमाणसद्भावमात्रोपपादनेन प्रत्यवस्थानमुपपत्तिसमः। यथानित्यः शब्दः कार्यत्वाद् घटवदित्युक्ते यद्यनित्यत्वे कार्यत्वं प्रमाणमस्ति तर्हि नित्यत्वेऽपि किमपि प्रमाणं सम्भविष्यति प्रकृतसन्देहविषयत्वात्, विप्रतिपत्तिविषयत्वाद् वा वादिप्रतिवाद्यन्यतरपक्षत्वात् त्वत्पक्षवदिति। (य ? त)था च बाधप्रतिरोधयोरन्यतरत्वापत्तिरिति प्रमाणसम्भावना उत्थानहेतुः। त्वत्पक्षवदिति निदर्शयता त्वयैव जातिवादिना स्थापनापक्षस्यानुज्ञानात् स्वव्याघातः अनुज्ञानप्रतिषेधयोरेकत्रासम्भवादिति ॥

वादिवाक्ये अवधारणं तात्पर्यं तावदारोप्य तद्विशेषं विकल्प्य सर्वथावधारणबाधेन प्रत्यवस्थानमुपलब्धिसमः। पर्वतोऽग्निमानित्युक्ते किं पर्वत एवाग्निमान् उताग्निमानेव पर्वतः। नाद्यः महानसादीनामपि अग्निमत्त्वोपलम्भात्। न द्वितीयः। अग्निं बिनापि कदाचित् पर्वतस्योपलब्धेः। ततश्च साध्याभावेऽपि धर्म्युपलम्भाद् बाधः। एवं हेतावप्यवधारणविकल्पो द्रष्टव्यः। धूमवत्त्वमसाधकं बाधितत्वादनुष्णत्वसाधकत्ववदिति जातिवाक्यार्थः। तथाचात्रापि धूमवत्त्वमेवासाधकम्। धूमवत्त्वमसाधकमेव। न प्रथमः। चाक्षुषत्वादेरपि असाधकदर्शनात्। न द्वितीयः। क्वचित्साधकस्यापि सम्भवात्। पक्षद्वयेऽपि बाधः। तथा च स्वव्याघात इति दूषणम् ॥

अनुपलब्धिः स्वस्मिन्ननुपलब्धिरूपेण वर्तते नवेति विकल्प्योभयथापि दूषणमनुपलब्धिसमः। यथा — शब्दो नास्ति अनुपलब्धत्वादिति प्रयोगे अनुपलब्धेः स्वात्मनि अनुपलब्धिरूपेण वृत्तौ विषयवत् स्व(व्याप्त्य ? स्वाप्य)नुपलब्धत्वात्तद्वदेवाभावप्राप्तौ अनुपलब्ध्यभावश्चोपलब्धिरिति विपरीतापत्तिः। स्वात्मनि स्वरूपेणावृत्तौ अनुपलब्धिरेव न स्यादिति तद्विषयः शब्दोऽनुपल(म्भो ? ब्धो) न स्याद् इत्युभयथाप्यसिद्धो हेतुरिति। उद्धारस्त्वेवम्।

स्वात्मनि ताद्रूप्येण वर्तत इति पक्षं कक्षीकुर्मः । तच्च न स्वात्मनो विषयी करणम् । किन्तु तदात्मकमिति न स्वरूपव्याघातप्रसक्तिः । तदिदमयुक्ताङ्गाधिकत्वम् । स्वात्मविषयत्वस्यायुक्तस्याङ्गीकारात् ॥

साधर्म्येण वैधर्म्येण वा साध्योपहारे कृते तत्प्रतिबन्धभिप्रायेण साधर्म्यादिना सर्वस्यापि साध्यधर्मवत्तां प्रदर्श्य विपक्षस्यापि सपक्षत्वापादनमनित्यसमः । यथा — यद्याकाशवैधर्म्यादनित्यः शब्दः, तर्हि तद्वैधर्म्यात् त्रैलोक्यमप्यनित्यं स्यात् । यदि घटसाधर्म्यादनित्यः शब्दः, तर्हि तत्साधर्म्यात् त्रैलोक्यमप्यनित्यं स्यादित्यादि । अस्य अविशेषसमातो भेदः । त(त्र ? त्र) पक्षादेरविशेषत्वापादनाद्, अत्र तु विपक्षस्य सपक्षत्वापादनादिति । दूषणं स्वव्याघातः । इदमसाधकम् । असाधकसाधर्म्यादित्यत्र जातिवाक्येऽपि स्वव्याघातः । इदमदूषकमदूषकसाधर्म्यादिति शक्यत्वाद्वक्तुम् । अस्ति च तत्रापि प्रतिज्ञाद्यवयवसाधर्म्यं स्थापनावाक्येनेति ॥

विवक्षितस्य कस्यचिद्धर्मस्य तद्रूपत्वमतद्रूपत्वं वेति विकल्प्य उभयथाप्यनुपपत्त्यभिधानेन धर्मिणस्तद्विशिष्टस्य खण्डनं नित्यसमः । एवमियं प्रवर्तते—अनित्यः शब्द इति प्रतिज्ञायां साध्यमनित्यत्वं नित्यमनित्यं वा, अनित्यत्वे कदाचित्तदभावाच्छब्दो नित्यः स्याद् इति न पश्चादनित्यत्वावकाशः । नित्यं चेदनित्यत्वधर्मस्य नित्यत्वात् तद्धर्मिणोऽपि शब्दस्य नित्यता स्यात् । अनाश्रयधर्मासम्भवादिति सरूपेण । विरूपेणापीयं प्रवर्तते । तस्यामेव प्रतिज्ञायामनित्यत्वयोगादनित्यः । तच्च धर्मिणो भिन्नमभिन्नं वे(ति) । भिन्नं चेद् भिन्नत्वयोगाद् भिन्नं, तदपि भिन्नत्वान्तरयोगाद् इत्यनवस्थापातः । अनित्यत्वस्य धर्मिणोऽभिन्नत्वे धर्मधर्मिणोरन्यतर एवावशिष्यते । तत्र धर्ममात्रस्यावस्थितावाश्रयासिद्धिः । धर्मिमात्रस्थितौ साध्याभावेन बाधः । अयं दूषणक्रमः । अनित्यः शब्दो भवितुं नार्हति नित्यभूतानित्यत्वधर्माश्रयत्वात् । नित्यपरममहत्वाश्रयव्योमवदिति जात्युत्तरार्थः । तत्रानित्यतया प्रतिषेध्ये शब्दे नित्यभूतानित्याश्रयादिति हेतुः सिद्धश्चेत् तदा शब्दे नित्यमनित्यत्वस्य स्वीकारादनित्ये नित्यत्वाभिमानं व्याहतम् । अथ जात्युत्तरहेतुरसिद्धः, तदा न प्रतिषेधक इति स्वव्याघातः । भिन्नाभिन्नविकल्पोऽपि दूषणे तुल्य इति तत्रापि स्वव्याघातः । एवञ्चासदुत्तराणां सर्वेषां

पक्षहेतुदृष्टान्तादिसाधनाङ्गस्यासिद्धत्वमुद्भाव्य स्वयं च तत्साधकं किञ्चिदभिधाय तद्दूषणेन वादिसाधनभङ्गापादनं कार्यसमः। यथा—अनित्यः शब्दः कार्यत्वादित्युक्ते प्रत्यवतिष्ठते असिद्धं तावत् कार्यत्वम्। तत्साधनं तु प्रयत्नानन्तरीय(क)त्वम्। तच्च प्रयत्नाभिव्यङ्ग्ये कूपोदकादावनेकान्तम्। तथा च कार्यत्वासिद्धिस्तदवस्थैव इति। एवं पक्षादावप्यूहनीयम्। अत्र लक्ष्यलक्षणे उक्ते। अनैकान्तिकत्वादिदुष्टसाधनोत्प्रेक्षा उत्थानहेतुः। पूर्वसाधनादेः असिद्धिरारोप्या। तद्भ्रान्तिः फलम्। दुष्टत्वमूलं तु प्रयत्नानान्तरीयकत्वमात्रं न कार्यत्वसाधकम्। किन्तु अनभिव्यञ्जकविशेषणसहितम्। प्रयत्नस्य तु शब्दोत्पादकत्वमेव। न त्वभिव्यञ्जकत्वम्। (अ)(स)त एव शब्दस्य अनुपलब्धिकारणे आवरणादौ सति हि व्यञ्जकत्वं स्यात्। नचास्यावारणादि सम्भवति। नित्यत्वे सर्वदा श्रोत्रसम्बन्धस्य सर्वदा प्रतीतिप्रसङ्गात्। तस्मादनभिव्यञ्जकप्रयत्नानान्तरीयकत्वात् कार्यः शब्दः इत्यत्र न कश्चिद् दोषः। अविषयवृत्तित्वं चासाधारणं दुष्टत्वमूलम्। निर्विशेषणस्य हेतोर्यो दोषः तस्य सविशेषणाविषयत्वात्। निर्दुष्टं हेतुं त्यक्त्वा सदोषहेत्वङ्गीकारात्। एवं सर्वत्र जातिषु ससाङ्गान्यूहनीयानीति। विस्तरस्तु परिशिष्टतार्किकरक्षादौ द्रष्टव्यः॥

इति जातिपदार्थसंक्षेपः॥

---

कथायां तत्त्वाप्रतीतिलिङ्गं निग्रहस्थानम्। तच्च द्वाविंशतिप्रभेदम्। तथाच सूत्रम्—"प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि" इति।

वादिना प्रतिवादिना वा पक्षहेतुदृष्टान्तदूषणादीनामन्यतमं निर्दिष्टं, तस्य दूषणसमुन्मेषेण कथानिर्वाहमपश्यता पुनस्त्यागः प्रतिज्ञाहानिः। त्यागश्च द्विविधः। यदि दुष्टमेतत् तर्हि माभूदिति कण्ठतः अन्यथास्त्वित्यर्थतः। पक्षे तावत् साध्यसाधनधर्मिणां तद्विशेषणानां च त्यागाः षड् भवन्ति। तत्राद्यो यथा—अनित्यः शब्दः ऐन्द्रियकत्वादित्यत्र सामान्येन व्यभिचारे दर्शिते, तर्हि शब्दोऽपि नित्योऽस्त्विति

साध्यत्यागः । तर्हि कृतकत्वादित्यस्त्विति साधनत्यागः । एवं धर्मित्यागादयोऽपि द्रष्टव्याः । दृष्टान्तेऽपि पूर्ववत् षड् भवन्ति । यथा— घटवदित्यत्र व्यभिचारेणैन्द्रियकत्वे दूषिते घटोऽपि तर्हि नित्योऽस्त्विति साध्यत्यागः । एवमितरत्रापि । दूषणहानिस्तु कार्यत्वेनानित्यत्वे साध्ये व्यभिचारोद्भावने तस्मिन्निरनुयोज्यानु(यो)गेन प्रत्युक्ते तर्हि स्वरूपासिद्धिरिति । उक्तं निर्वहेत्, निर्वाह्यमेव वदेदित्युपदेशः ॥

पूर्वोक्ते निर्विशेषणे साध्यांशे दूषिते तद्विशेषणप्रक्षेपः प्रतिज्ञान्तरम् । द्व्यंशो ह्यनुमानप्रयोगः— साध्यांशः साधनांशश्चेति । तत्राद्यः प्रतिज्ञादृष्टान्तयोः प्रयोज्यभागो निगमनञ्चेति । शेषः साधनभागः । यथा— हेतूपनयदृष्टान्तप्रयोजकभागाः । तत्र साध्यांशेन प्रतिज्ञान्तरं साधनांशेन हेत्वन्तरमिति भेदः । उदाहरणं तु यथा— नित्या वर्णाः श्रावणत्वात् शब्दवदित्यत्र ध्वनिभिरनैकान्तिकत्वोद्भावने सध्वनयो वर्णा इति पक्षान्तरप्रक्षेपः । इयं प्रतिज्ञाहानिरेव अनिष्टस्य त्यागादिति चेत् । न । पूर्वोक्तस्यापरित्यागात् प्रक्षिप्तस्य पूर्वमनुक्तत्वादिति । अत्र कक्ष्यान्तरेण न विशेषणीयम् इति रहस्यम् ॥

एकवक्तृकयोरवान्तरवाक्ययोः पदयोर्वा यः परस्परव्याघातः स प्रतिज्ञाविरोधो नाम निग्रहस्थानम् । तच्च धर्मधर्मिनिषेधात् तयोरेव विधानाच्चतुर्विधम् । ईश्वरो न कर्तेति धर्मनिषेधः । ईश्वरो नास्तीति धर्मिनिषेधः । ईश्वरः किञ्चिज्ज्ञ इति ध(र्म ? र्मि)विधिः । अतीतमस्तीति धर्मविधिः । प्रतिज्ञाहेत्वोर्विरोधस्तु गुणव्यतिरिक्तं द्रव्यम् अव्यतिरिक्तत्वादिति ॥

स्वोक्तस्य स्वयमेवापलापः प्रतिज्ञासंन्यासः । यथा —मयेदं नोक्तमिति त्वयेदमुक्तमिति वा । प्राश्निकाद्यवगतं नापलपेदिति रहस्यम् ॥

साधनांशे दूषिते पुनस्तद्विशेषणप्रक्षेपो हेत्वन्तरम् । यथा—अनित्यः शब्दः अस्मदादिबाह्येन्द्रियग्राह्यत्वादित्यत्र सामान्येन व्यभिचारे दर्शिते सामान्यवत्त्वे सतीति हेत्वन्तरप्रक्षेपः । शेषं प्रतिज्ञान्तरवद् द्रष्टव्यम् ॥

प्रकृतसाधनस्य दूषणस्य वा अनुपयुक्ताङ्गवचनमर्थान्तरम् । तच्च स्वपरोभयानुभयभेदेन चतुर्विधम् । स्वमते तावत्— अनित्यः शब्दः ऐन्द्रियकत्वादिति, गुणश्च शब्दः आकाशस्येत्यादि । परमते— तत्रैव प्रयोगे द्रव्यं शब्दः

वास्यानुभवगम्यम् । तच्च प्रमाणम् । तच्चतुर्विधं षड्विधं वेत्यादि । अनुभयमते तु — तथैवोपक्रम्य हेतुरयं हेतुश्च हिनोतेर्धातोस्तुप्रत्यये सति सिद्धमित्यादिः । झटिति दोषस्फुरणे समाधिमपश्यतः तिरोधानायास्योक्तिसम्भवः । प्रकृतोपयोगमेव वदेदिति रहस्यम् ॥

अवाचकप्रयोगो निरर्थकम् । यथा — कचटतपानां गबजडदत्वात् समानसङ्केतितैरेव पदैर्व्यवहरेदित्युपदेशः ॥

वादिना त्रिभङ्ग्यन्तरमुक्तेऽपि वाक्ये प्राश्निकैः प्रतिवादिना च अविज्ञायमानार्थं वाक्यम् अविज्ञातार्थं नाम निग्रहस्थानम् । तच्च प्रयोक्तुरेव भवति । पञ्च स्कन्धा द्वादशायतनानीति बौद्धानां कश्यपतनयाधृतिहेतुरयं त्रिणयनतनययानसमाननामधेयवान् तत्केतनवत्त्वादित्यादि ॥

पदवृन्दं वाक्यवृन्दं वा अनन्वितमपार्थकम् । विशेषणविशेष्यभावेन हि शब्दानामन्वयो भवति । तद्रहितमपार्थकम् । यथा — दश डाडिमानि षडपूपा इति । ओदनं सरसि भुक्त्वा स्नातो यातीति व्यवधानान्वयमप्यपार्थकमेव । अन्वितमेव वदेदित्युपदेशः ॥

अवयवादिविपर्यासवचनमप्राप्तकालम् । अयमिह कथाक्रमः । आदौ सभ्यानुविधेयसंवरणं तदनु जल्पादिकथाविशेषनियमः । ततः सभ्येन प्रतिवादिना वा पृष्टे प्रमाणमाभिधाय संक्षेपतो विस्तरतो वा हेत्वाभासा उद्धरणीयाः । नास्त्यत्र कश्चिद्दोष इति संक्षेपः । नायमासिद्धः नायं विरुद्धः इत्यादि विस्तरः । प्रतिवादिनाप्यनुभाषणपुरस्सरं वादिसाधनं दूषयित्वा स्वपक्षे साधनमभिधेयम् । तत आभासोद्धारः कर्तव्य इति जल्पे । वितण्डायां तु दूषणमात्रे पर्यवसातव्यम् । न स्वपक्षकथनादि साधनीयम् । अत्र सर्वत्र क्रमविपर्यये अनुमानावयवविपर्यये चाप्राप्तकालं नाम निग्रहस्थानं भवति । भूषणकारस्तु नियमकथायामेवाप्राप्तकालं दोषं मन्यते, नान्यत्र विपर्यासे व्यर्थप्रत्ययसम्भवादिति । अत्र आकाङ्क्षाक्रमेण ब्रूयादिति रहस्यम् ॥

स्वसिद्धान्तसिद्धावयववादिषु एकेनापि (न्यूनं) न्यूनम् । नचायमपसिद्धान्तः । सहि स्वस्वसिद्धान्तविरुद्धाभ्युपगमः । इयन्तु विरोधानभ्युपगमेऽपि समाक्षोभादिना न्यूनता सम्भवति । परिपूर्णं वाच्यमिति हृदयम् ॥

अन्वितमुपयुक्तमपुनरुक्तं कृतकरमधिकम् । यथा—अग्निमान् पर्वतो धूमवत्त्वादालोकवत्त्वाच्चेति, धूमादिमत्त्वादिति वा । अत्र चाकृतकरमेव वदेदिति रहस्यम् ॥

प्रयोजनरहितं पुनर्वचनं पुनरुक्तम् । अनुवादस्तु सप्रयोजनकं पुनर्वचनम् । यथा निगमनम् । इदन्तु प्रयोजनरहितं, यथा—अनित्यः शब्दोऽनित्यः शब्द इति । अनित्यः शब्दो विनाशी ध्वनिरिति वा ॥

प्राश्निकावगतार्थं वादिना त्रिरुक्तमपि वाक्यं यो नानुभाषते तस्याननुभाषणं नाम निग्रहस्थानम् । तत्रोभयप्रसिद्धैरेव पदैरनुभाषणीयम् । नत्वप्रसिद्धैरन्यतरप्रसिद्धैर्वा । नतु वाद्युक्ताक्षरैरेवानुभाषणीयमिति नियमः । नियमकथायां तु तथैवानुभाषणीयम् । अन्यथाननुभाषणमेव भवति ॥

वादिना त्रिरुक्ते प्राश्निकैर्ज्ञातार्थेऽपि वादिवाक्ये प्रतिवादी यदा स्वाज्ञानमुद्भावयति न ज्ञायते मयेति, तदा तस्याज्ञानं नाम निग्रहस्थानम् । यदा त्वज्ञानं नाविष्करोति तदाननुभाषणमेव ॥

वादिनोक्तस्य स्वेन चानूदितस्य वाक्यस्य प्रतिवादी यदोत्तरं न ब्रूते तदा अप्रतिभा । न केवलं तूष्णींभावोऽप्रतिभा । अपितु राजादिवार्ताकेशविरचनगगनसूचनादिकरणमप्यप्रतिभैव । तूष्णींभाव एवाप्रतिभा, इतरकरणे त्वर्थान्तरमिति केचित् ॥

कथामभ्युपगम्य परिषदि सावधाने प्रतिवादिनि चैकाग्रे, अद्य मे महत्प्रयोजनमस्ति श्वः परश्वो वा कथयिष्यामीति कस्यचिद्व्याजस्य वचने तस्य विक्षेपो नाम निग्रहस्थानम् । मूत्रोच्चारणाद्यावश्यकं कर्म न व्याजो भवति ॥

अनिष्टभ्रमादन्यस्येष्टापादने मतानुज्ञा । स्वदोषमभ्युपगम्य परस्य दोषापादनं मतानुज्ञेति वा । यथा—त्वं चोर इत्युक्ते पुरुषत्वात् त्वमपि चोर इत्यापादनम् । स्वचोरत्वस्याभ्युपगमान्न परस्येदमनिष्टम् । परस्यानिष्टमेव ब्रूयादिति रहस्यम् ॥

पर्यनुयोज्योपेक्षणव्यतिरिक्तनिग्रहप्राप्तौ तदनुद्भावनं पर्यनुयोज्योपेक्षणम् । एतत्परिषदा उद्भाव्यम् ॥

यस्य निग्रहस्थानमप्राप्तं तस्य तदुद्भावने वक्तुरेव निरनुयोज्यानुयोगो निग्रहस्थानम् । निग्रहस्थानान्तरप्राप्तावपि तदितरनिग्रहे उदितेऽपि निरनुयोज्यानुयोग एव । स चतुर्धा । तदुक्तं वरदराजेन

"अप्राप्तकाले ग्रहणं हान्याद्याभास एव च ।
छलानि जातय इति चतस्रोऽस्य विधा मताः ॥"

इति । प्रतिज्ञाहान्याद्याभासाः सारसङ्ग्रह एव द्रष्टव्याः । विस्तरभियात्र नोच्यन्ते । अप्राप्तकालग्रहणं तु यो यस्योद्भावनकालः तदुल्लङ्घ्य ग्रहणम् । कालस्तु तार्किकरक्षायामेवोक्तः ।

"उक्तग्राह्याः केचिदन्येऽनुक्तग्राह्यास्तथापरे ।
उच्यमानदशा ग्राह्या इति कालस्त्रिधा मतः ॥"

इति । मया न ज्ञायत इत्युक्तमेव ग्राह्यमज्ञानम् । तद्वचनमन्तरेण विज्ञातमात्रमेव ग्राह्यं हेत्वन्तरादि । अपशब्दादि तूच्यमानदशाग्राह्यम् । अनर्थान्तरादिकमपि तथा । एतदन्यकालग्रहणे निरनुयोज्यानुयोग एव । छलजातिस्तु दर्शितैव । अनिग्रहे निग्रह इत्यनेन एतत्सर्वमुक्तम् ॥

यस्य कस्यचित् सिद्धान्तमभ्युपेत्य कथायां प्रवृत्तायां मध्ये तत्सिद्धान्तविरुद्धाभिधानमपसिद्धान्तः । यथा—एकप्रकृतयो महदादिविकाराः एकस्वरूपान्वितत्वाद् घटादिवदित्युक्ते का प्रकृतिः को विकार इति पृष्टः साङ्ख्यो यदि ब्रूयात् असन्तो भावा यतो जायन्ते सा प्रकृतिः, जननविनाशवन्तो विकारा इति, तदा सत्कार्यवादपरित्यागात् तस्यापसिद्धान्त इति । नच सिद्धान्तमनाश्रित्य कथायां प्रवृत्तिः सम्भवति । अन्यथा अनित्यः शब्द इति तार्किकेणोक्ते मीमांसको ब्रूयात् सिद्धान्तसाधनमिति । स्वसिद्धान्ताश्रयणेन तथा वक्तुं शक्यते । अतः शाखाचङ्क्रमनिरासाय सिद्धान्त आश्रयणीय इति ॥

हेत्वाभासाश्च पूर्वं येन प्रकारेणोक्ताः तेनैव ते निग्रहस्थानानि भवन्ति । तदुक्तं सूत्रकृता — "हेत्वाभासाश्च यथोक्ता इति ।" तथैव ते निग्रहस्थानानीति शेषः ॥

एते जल्पवितण्डयोः सर्वे सम्भवन्ति । अवश्यमुद्भाव्याश्च । तदुक्तम् —

"एते सम्भविनः सर्वे समुद्भाव्याश्च निग्रहाः ।
विच्छेदकाः कथायाश्च द्वयोर्जल्पवितण्डयोः ॥"

इति । तथा वादे निग्रहप्रकारश्चतुर्धा । तदुक्तम्—

"चतुर्धा निग्रहगतिर्वादेऽसम्भववर्जिताः ।
अनुद्भाव्यास्तथोद्भाव्याः कथाविच्छेदहेतवः ॥"

इति । अर्थान्तरम् अविज्ञातं प्रतिज्ञाहानिः प्रतिज्ञासन्न्यासः निरर्थकम् अपार्थकं षडेतान्यसम्भावितानि । एतेषां स्वाज्ञानसंवरणपराज्ञानप्रकाशनार्थत्वेन प्रवृत्तेर्वादे च तदसम्भवा(त् ? द)सम्भावितत्वम् । प्रमादेन कदाचित् सम्भवेऽप्यनुद्भाव्यानि । विक्षेपाप्रतिभे अज्ञानहेत्वन्त(रं ? र)पर्यनुयोज्योपेक्षणप्रतिज्ञान्तरमतानुज्ञा एते सप्तानुद्भाव्याः । प्रमादेन सम्भविनामप्येषामनुद्भावनेन कथाप्रवृत्तौ तत्त्वनिर्णयसम्भवात् । एते च सप्त उद्भाव्याः । के ते । न्यूनमधिकमपसिद्धान्तः प्रतिज्ञाविरोधः अननुभाषणं पुनरुक्तमप्राप्तकाल इति । न्यूनत्वादिदूषितस्य हेतोस्तत्त्वनिर्णायकत्वायोगात् तानुद्भाव्य तत्समाधानेन कथा प्रवर्तनीया । नह्येते कथाविच्छेदहेतवः । हेत्वाभासो निरनुयोज्यानुयोगश्चेति द्वयं कथाविच्छेदहेतुः । हेत्वाभासे सति पूर्वहेतुं परित्यज्य हेत्वन्तरोपादाने कथा पूर्वा विच्छिन्नैव । निरनुयोज्यानुयोगश्च विच्छेदहेतुः । अन्यथा कथाभासपरम्पराप्रसङ्गादिति ॥

इति संक्षेपतो न्यायशास्त्रं प्रदर्शितम् । अनुक्तं तु षट्पदार्थनिरूपणे पूर्वस्मिन् द्रष्टव्यम् ।

पदवाक्यप्रमाणज्ञो माधवाख्यसरस्वती ।
संक्षेपतो न्यायशास्त्रमदर्शत् स्वशक्तितः ॥

---

अथ मीमांसा संक्षेपतो निरूप्यते । तत्र मीमांसा सहस्राधिकरणा जैमिनिमुनिनिर्मितसूत्रा ।

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।
निर्णयश्चेति पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः ॥"

विषयो नाम विचारस्य विषयवाक्यम् । यथा — 'अग्निहोत्रं जुहोती'ति । अत्राग्निहोत्रं गुणविधानं वा कर्मनामधेयं वेति विशयः सन्देहः ।

होमानुवादेनाग्निहोत्रं गुणविधिरिति पूर्वः पक्षः। अग्निहोत्रमिति सायंप्रातराहुतिविशेषकर्मणो नामधेयमित्युत्तरः पक्षः सिद्धान्त इत्यर्थः। निर्णयस्तु विचारफलभूतः। ईदृशमधिकरणानां पञ्चात्रयनोपेतं सहस्रं मीमांसायाम्। सा च द्वादशलक्षणी। तत्र पूर्वषट्कमपरषट्कं चेति भागद्वयम्। तत्र सहस्राधिकरणद्वादशलक्षण्या मीमांसायाश्चतुर्विंशतिसाहस्रं शबरस्वामिकृतं भाष्यम्। तदुपरि प्रस्थानद्वयं भाट्टं प्राभाकरमिति। तत्र भट्टाचार्याणां पञ्च व्याख्यानानि भाष्यस्य। एका बृहट्टीका। द्वितीया मध्यमटीका। तृतीया टुप्टीका। चतुर्थी कारिका। पञ्चमं तन्त्रवार्त्तिकम् उक्तानुक्तदुरुक्तचिन्तकम्। तत्र बृहन्मध्यमटीके सम्प्रति न वर्तेते। त्रयन्तु भागशो वर्तते। प्रथमा कारिकाध्यायप्रथमचरणे तर्कनामके कारिका। ततः परमध्यायसमाप्तिः। त(त्र? तः) वार्त्तिकम्। तदुपरि टुप्टीका। कारिकायाश्च उंवेकनिर्मिता एका टीका कारिकाख्या। अपरा पार्थसारथिनिर्मिता। तन्त्रवार्त्तिकस्य अजिता नाम टीका। वार्त्तिकस्यैव राणकापरपर्याया न्यायसुधापि टीका। टुप्टीकायाः पार्थसारथिटीका। द्वादशलक्षण्यां प्रकरणं शास्त्रदीपिका पार्थसारथिनिर्मिता। तन्त्रवार्त्तिकस्य प्रकरणं न्यायरत्नमाला। विधिविवेकभावनाविवेकौ मण्डनमिश्रकृतौ तयोरेव विचारभूतौ। विधिविवेकटीका न्यायकणिका वाचस्पतिमिश्ररचिता। एतद् भाट्टप्रस्थानम्। प्राभाकरप्रस्थानन्तु भाष्यस्य प्राभाकरकृतं व्याख्यानद्वयम्। एकं विवरणं षट्सहस्ररूपम्। अपरो निबन्धसंज्ञः द्वादशसाहस्रः। विवरणस्य ऋजुविमला निबन्धस्य दीपशिखा(चेति) टीकाद्वयम्। शालिका नाथकृतं प्रकरणम्। शालिका नाम नयविवेको भवनाथकृतं प्रकरणं द्वादशसाहस्रम्। तट्टीका वरदराजकृता अष्टाचत्वारिंशत्साहस्री। तथा प्रस्थानमित्यादि निबन्धाः सन्ति। तत्र भट्टाचार्यैः कारिकायां प्रथमाध्यायप्रथमचरणव्याख्यायां तर्कचरणसंज्ञितायां पदार्था निर्णीताः। प्रमाणानि च निर्णीतानि। पदार्था अनन्ता भाट्टमते यद्यपि, तथापि द्रव्यादिषु मध्ये द्रव्यगुणकर्मसामान्यानि चत्वारि। विशेषसमवायौ न स्त एव। समवायस्थाने तादात्म्यमभिषिञ्चति। भेदसहिष्णुरभेदस्तादात्म्यम्। तथा च धर्मिद्वारेणाभेदः। धर्मद्वारेणैव भेदः। धर्मी घट एक एव। धर्मास्तु रूपरसादयः कर्मसामान्यादयश्चानेके। तर्ह्येतेषां भेदादाधारभेदोऽपि स्यादिति चेत् तत्तद्वैशिष्ट्यभेदस्त्विष्यत एव। स्वरूपतस्तु धर्मी एक एव। किञ्च धर्म-

धर्मिणोरत्यन्तभेदे गवाश्ववत् सामानाधिकरण्यप्रत्ययो न स्यात् । अत्यन्ताभेदे च घटो घट इतिवत् सामानाधिकरण्यप्रत्ययो न स्यात् । अत एतत्प्रत्ययान्यथानुपपत्त्यैव भेदाभेदसिद्धिः । प्राभाकरमते तु समवायोऽस्त्येव । किन्त्वनेकः । रूपादिव्य(क्त)यस्तु एकैका एव नित्याः । समवायनाशादेव तेषां नष्टत्वबुद्धिः । तदुत्पत्तौ चोत्पन्नत्वबुद्धिः । तथा सादृश्यं पदार्थान्तरम् । संख्या च पदार्थान्तरम् । शक्तिश्चोभयोरपि मते पदार्थान्तरम् । तत्त्रितयसाधकञ्च प्रमाणम् । शक्तिसङ्ख्यासादृश्यानि न द्रव्यं गुणवृत्तित्वात्, यदेवं तदेवं, यथा गुणत्वादीति । तथा गुणकर्माण्यपि न भवन्ति, गुणवृत्तित्वादेव, सत्तादिवत् । नापि सामान्यादिकं तत्र वृत्तित्वात् । यद् यत्र वर्तते तत्तन्न भवति यथा गुणवर्ति गुणत्वं गुणो न भवति, तथा शक्तिसंख्यासादृश्यान्यपि सामान्यादिवृत्तित्वात् तन्न भवति । अतः पदार्थान्तराणि । तदुक्तम् —

"न द्रव्यं गुणवृत्तित्वाद् गुणकर्मबहिष्कृता ।
सामान्यादिषु सत्त्वेन सिद्धा भावान्तरं हि सा ॥"

इति । सा शक्तिः सङ्ख्या च । लिङ्गविपरिणामेन (द्रष्टव्यम्?) सादृश्यमपि द्रष्टव्यम् । तथाच प्राभाकरमते शक्तिसंख्यासादृश्यैः सह विशेषरहिता द्रव्यादयः पञ्च पदार्थाः । अतोऽष्टौ पदार्थाः ॥

भाट्टमते तु दण्डी वनं सेनेत्यादौ वैशिष्ट्यप्रतीतेः वैशिष्ट्यं पदार्थान्तरम् । ननु विशेष्यतत्तत्सम्बन्धव्यतिरेकेण वैशिष्ट्यं नास्त्येव दण्डपुरुषसंयोगेष्वेव दण्डिव्यपदेशात् । एकदेशावस्थितानां वृक्षाणामेव वनत्वात् । गजतुरगपदातीनामेव सेनात्वव्यपदेशादिति चेत् । मैवम् । दण्डादयः प्रत्येकं वा विशिष्टव्यवहारजनकाः समुदिता वा । नाद्यः । प्रत्येकदर्शनेऽपि विशिष्टव्यवहारप्रसङ्गात् । न द्वितीयः । वैशिष्ट्यस्यैव स्वीकारात् । समुदायस्यैव विशिष्टत्वात् । एकदेशस्थितवृक्षेष्वपि प्रत्येकं विशिष्टव्यवहारजनकत्वायोगात् समुदाय एव हेतुः स्वीकार्यः । स वैशिष्ट्यमेव । गजादीनामपि समुदितानामेव विशिष्टव्यवहारहेतुत्वम् । न प्रत्येकमिति वैशिष्ट्यसिद्धिः । वैशिष्ट्यानङ्गीकारे सर्वानुभवविरोधः । तस्माद्वैशिष्ट्यं पदार्थान्तरम् ॥

सुवर्णं च पार्थिवं, पीतिमगुरुत्वाश्रयत्वात्, पटवत्। उपष्टम्भकभागकल्पनायां पीतिमगुरुत्वयोश्च तत्तत्त्वकल्पने च कल्पनागौरवं स्यात्। सुवर्णगतत्वकल्पनायां तु न कश्चिद्दोषः।

अत्यन्ताग्निसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वादपार्थिवं, जलवदिति चेत्। न। हेतोरसिद्धत्वात्। द्रुतं द्रुततरं द्रुततममिति प्रत्ययादाधारनाशाद् द्रवत्वस्यापि नाशात्। तथापि तत्परमाणुषु द्रवत्वस्य नाशाभावात् तत्र पुनः पुनः द्रवत्वमारभते। पार्थिवे तु परमाणावपि द्रवत्वं नश्यतीति विशेष इति चेत् तर्हि, साधनविकलो दृष्टान्तः। जलस्याप्यत्यन्ताग्निसंयोगे सति नाशात् तद्गतद्रवत्वस्यापि नाशात्। जलपरमाणुषु दृष्टान्त इति चेत्, तर्हि सुवर्णं न तैजसं नैमित्तिकद्रवत्वाधिकरणत्वाद् घृतवदिति वा, सुवर्णं पार्थिवं तत एव वा, तद्वदेवेति वा, सत्प्रतिपक्षत्वात्। किञ्च यदि सुवर्णं तैजसं स्यात् तर्हि द्रवत्वाधिकरणं न स्याद् आलोकवदिति तर्कपराहतिः। सुवर्णमतैजसं द्रवत्वाधिकरणत्वाद् जलवत्। अतैजसत्वे सिद्धे रूपत्वान्न वाय्वादि। नैमित्तिकद्रवत्वाश्रयत्वात् पीतिमाधारत्वाच्च न जलम्। परिशेषात् पार्थिवमेव सुवर्णमिति सिद्धम्।

शब्दश्च नवद्रव्यबहिर्भूतं द्रव्यम्। तदुक्तमाचार्यैः—

"वर्णात्मकाश्च ये शब्दा नित्याः सर्वगताश्च ते।
सिद्धं द्रव्यतया ते तु न गुणाः कस्यचिन्मताः॥"

इति। वर्णास्तावन्नित्याः उत्पादकाभावाद् आकाशादिवत्। असिद्धो हेतुः ताल्वादिव्यापारस्यैवोत्पादकत्वाद् इति चेत्। न। तस्य व्यञ्जकत्वात्। तर्हि सर्वे वर्णा एकदैव व्यज्येरन् व्यञ्जकस्य सन्निहितसर्वव्यञ्जकत्वदर्शनात् प्रदीपादाविति चेन्न। वक्तृविवक्षानुसारेण वर्णानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वात्। अन्यथा उत्पादकत्वे कथं युगपन्नोत्पादं ययुः, यथा प्रदीपो युगपदेव तमोविनाशरूपादिप्रकाशवर्त्तिविकारतैलनाशान् करोति। तथा नित्यत्वे वर्णानां स एवायं गकार इत्यादिप्रत्यभिज्ञापि प्रमाणम्। भ्रान्ता प्रत्यभिज्ञेति चेत्। न। बाधाभावात्। अन्यथातिप्रसङ्गात्। व्यापकाश्च प्रत्य-

भिज्ञानादेव । तत्रोपलब्ध एवायमत्राप्युपलभ्यते । तदोपलब्ध एवायमिदानीमप्युपलभ्यते गकार इति प्रत्यभिज्ञानात् ।

उदात्तादयश्च ध्वनय उत्पद्यन्ते विनश्यन्ति च । तदुपाधिके च उत्पादविनाशप्रतीती, नतु शब्दे स्वाभाविके । (का ? ता)रत्व(म)न्द्रत्वादिप्रतीतिरप्यनुपाधिका, ध्वनिगतत्वात् तस्याः । ध्वनिश्च कौष्ठयोर्वायुर्वा (?) नाभसो वा ।

शब्दश्च द्रव्यम् । साक्षादिन्द्रियसम्बन्धेन गृह्यमाणत्वात् पटवत् । साक्षात् सम्बन्धश्च स्वमते संयोगः परमते तु समवाय इति नान्यतरासिद्धिः । ननु शब्दो गुणः बहिरिन्द्रियव्यवस्थापकत्वाद् रूपवद् इति गुणत्वसिद्धिरिति चेन्न । किमिदं बहिरिन्द्रियव्यवस्थापकत्वं तदुत्पादकत्वं वा तज्ज्ञापकत्वं वा । नाद्यः । शब्देन तदनुत्पादनात् । नापि द्वितीयः । द्रव्यत्वेऽपि ज्ञापकत्वसम्भवात् । यथा घटोपलब्धिः करणपूर्विका क्रियात्वादिति करणत्वसिद्धिः, तथा शब्दोपलब्धिः करणपूर्विकेति श्रोत्रसिद्धिः । अतो गुणत्वसाधकाभावात् द्रव्यत्वस्यैव सिद्धिः । महत्त्वसंयोगादिगुणवत्त्वाच्च शब्दो द्रव्यम् अन्यतरकर्मजादिकारत्वव्यतिरेकेण द्रव्यस्यावस्थानासम्भवात् । तस्माच्छब्दो द्रव्यम् ।

प्राभाकरमते शब्दो गुणः । तेषां मते शब्दो नित्यः व्योमैकगुणत्वात् तद्गतपरममहत्त्ववदित्यनुमानम् । श्रावणत्वाच्छब्दत्ववदित्युभयोरपि मते नित्यत्वसाधकम् ॥

तमश्च द्रव्यम् । रूपवत्त्वात् क्रियावत्त्वाद् वा घटवत् । आलोकाभावे रूपादेरारोपादसिद्धं हेतुद्वयमिति चेन्न । अभावे भावारोपाभावात् । नहि घटाद्यभावे रूपादिकं कश्चिदारोपयन् दृष्टः । तस्मात् स्वाभाविकरूपादिमत्त्वात् तमो द्रव्यम् । नाभावः । ननु भावरूपचक्षुषा साक्षात्कारे आलोकसहकृतचक्षुषो जनकत्वनियमात् तन्निरपेक्षचक्षुर्ग्राह्यत्वं तमसः कथमिति चेन्न । नियमस्य तेजस्येव व्यभिचारात् । नहि तेजसि तेजोन्तरं सहकार्यस्ति । तत्रापि तदवयवाः सहकारिण इति चेद्, विषयसंस्कारकत्वे इन्द्रियसंस्कारकत्वे वालोकसंयोगेन सहकारित्वं दृष्टम् । न समवायेन । तेजोवयवानां तु संयोगो न सम्भवति । किञ्च आलोकाभावेऽपि तमसि

आलोकः सहकारी किमिति नापेक्ष्यते। विरोधादिति चेत्, तदा भावरूपत्वेऽपि विरोधादेव न तदपेक्षा। विरोधश्च भावत्वे अभावत्वे च समानः। तच्च नाकाशादि क्रियावत्त्वात्। नापि वायुर्मनो वा रूपवत्त्वात्। नापि जलतेजसी नीलरूपवत्त्वात्। नापि पृथिवी गन्धरहितत्वात्। नच नीलरूपवत्त्वेन गन्धवत्त्वमपि साधनीयम्। बाधात्। तस्मान्नवद्रव्यबहिर्भूतं तमो द्रव्यम्। ननु तन्नित्यमनित्यं वा। नाद्यः। उत्पादविनाशानुभवविरोधात्। न द्वितीयः। आरम्भकाभावात्। स्पर्शवतामेवारम्भकत्वात्। तमःपरमाणुषु कल्पितेष्वपि स्पर्शवत्त्वाभावादिति चेन्न। मूर्त्तत्वमेवारम्भकप्रयोजकमस्तु न स्पर्शवत्त्वम्। तर्हि मनसोऽप्यारम्भकत्वप्रसङ्ग इति चेत्, तदारब्धशरीरेन्द्रियविषयरूपभोग्याभावादारम्भवैयर्थ्यात्। तमसस्तु विषयत्वेन भोग्यत्वात्। यद्वा स्पर्शवत्त्वमनुद्भूतं कल्प्यताम्। तथा च स्पर्शवत्त्वमेवारम्भकप्रयोजकं भविष्यति। उद्भूतस्पर्शवदेवारम्भकमिति तु न नियमः। इन्द्रियाद्यारम्भकाणामवयवानामनुद्भूतस्पर्शवत्त्वात्। उद्भूतत्वे तु तदारब्धेन्द्रियाणां स्पार्शनत्वप्रसङ्गात्। नित्यत्वपक्षस्त्वनङ्गीकृत एव। तदुक्तमाचार्यैः—

"तमः खलु चलं नीलं परापरविभागवत्।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥"

इति। तस्मात् तमो द्रव्यान्तरमिति सिद्धम् ॥

वायुः स्पार्शनप्रत्यक्षः गृह्यमाणस्पर्शाधिकरणत्वात् पटवत्। बहिरिन्द्रियजद्रव्यसाक्षात्कारे उद्भूतरूपत्वं प्रयोजकमिति चेन्न। तस्य चाक्षुषसाक्षात्कार(क?)मात्रप्रयोजकत्वात् न स्पार्शनप्रत्यक्षत्वे। अन्यथा द्रव्यप्रत्यक्षत्वे एव उद्भूतरूपवत्त्वस्य प्रयोजकत्वे आत्मापि प्रत्यक्षो न स्यात् ॥

वायोः प्रत्यक्षत्वे तद्गतसङ्ख्यादयोऽपि प्रत्यक्षाः स्युः। द्रव्यस्य प्रत्यक्षत्वे तदाधेयानामपि तेषां प्रत्यक्षत्वनियमादिति चेन्न। इष्टापत्तेः। पूर्वपश्चिमादिभेदेन सङ्ख्याग्रहणात्। कारे च सङ्ख्याः(?) प्रत्यक्षत्वात्। सर्वमभिव्याप्यागमनदर्शनात् महत्त्वं गृह्यते। स्थूलो वायुरायातीति प्रतीतेः। संयोगविभागपृथक्त्वानि प्रसिद्धानि। गमनादिप्रतीतेः कर्म प्रत्यक्षम्। ननु गृह्यमाणस्पर्शाधिकरणत्वं निदाघोष्मणि भर्जनकपालादिगतानु-

द्भूतरूपाधिकरणे तेजसि व्यभिचरतीति चेन्न । तस्यापि प्रत्यक्षत्वात् । अत एव च न्यायः प्रवर्तते 'नहि पक्षे पक्षताव्यभिचार' इति । अन्यथा उद्भूतरूपवत्त्वस्यापि बहिरिन्द्रियजद्रव्यसाक्षात्कारत्वप्रयोजकत्वे प्रभापि स्पार्शनी स्यात् । तत्रापि तुल्यमेतदिति चेत्, मम स्पार्शनसाक्षात्कारे स्पर्शोद्भवस्यैव प्रयोजकत्वात् ॥

ननु बहिरिन्द्रिय(ज)द्रव्यसाक्षात्कारे उद्भूतरूपस्पर्शवत्त्वमुभयं प्रयोजकमस्तु । तथाच वायुरप्रत्यक्ष एवेति चेन्न । चाक्षुपसाक्षात्कारे रूपस्य स्पार्शने तु स्पर्शस्य च प्रयोजकत्वात् । तस्माद् वायुः स्पार्शन इति सिद्धम् ॥

आकाशश्चाक्षुष इति केचित् । इहाकाशे खगश्चरतीत्यनुभवात् । प्रभामण्डलं तस्य विषय इति चेन्न । इहाकाशेऽन्धकार इत्यप्यनुभवात् । नीलं नभ इति भ्रान्तिरपि नभसः प्रत्यक्षत्वमावेदयति । अधिष्ठानप्रत्यक्षत्वमन्तरेण प्रत्यक्षभ्रान्त्ययोगाद् इति ॥

कालोऽपि प्रत्यक्षः । यथा (यथा?) षडिन्द्रियाणाम् इयन्तं कालमिदमहमन्वभूवमिति प्रतीतेः । स्थूलः कालोपाधिरेवमनुभूयते न काल इति चेत् । उपाधिरपि सूर्यगत्यादिः । स च स्वतः पदार्थान् सम्बद्धुमीष्टे । तदुपस्थापकः काल एव । अतः स चास्तु प्रत्यक्ष इति । कालः अतीन्द्रियः विशेषगुणशून्यद्रव्यत्वाद् मनोवदिति चेन्न । प्रत्यक्षबाधात्, प्रत्यक्षस्य प्रदर्शितत्वात् ॥

आत्मा तु द्रव्यबोधरूपः । तस्य परिणामो बुद्धिः । तया स प्रत्यक्षीक्रियते । नचात्मानमहं जानामीत्यत्र कर्मकर्तृविरोधः । द्रव्यरूपेण कर्मत्वात् मतान्तर एव स दोषः । औपाधिकभेदस्यापि दर्शयितुमशक्यत्वादिति ॥

मनश्च विभु, सर्वदा स्पर्शरहितद्रव्यत्वात् । ज्ञानासमवायिकारणाधारत्वात् आत्ममनसोर्विभुत्वेन सर्वदा इन्द्रियसम्बद्धत्वात् कदाचित् सर्वैर्विषयैः सम्बन्धे सति युगपज्ज्ञानप्रसङ्गादिति चेद्, ओमित्युत्तरम् । दीर्घशष्कुलीभक्षणादौ तथेष्टत्वात् । तर्हि व्यासङ्गानुपपत्तिः । स च दृश्यते । शब्दमश्रौषं, रूपं नाद्राक्षम्, इत्यनुभवादिति चेन्न । करणधर्मत्वेनोत्पादनीयत्वात् । एकं करणमेकदैकमेव ज्ञानं जनयतीति नियमात् । आत्ममनसोः

सर्वशरीरव्यापित्वाद् असमवायिकारणस्य विभुगुणनियामकत्वात् सर्वाङ्गीणमेव सुखं स्यात् । मनसोऽणुत्वेन तत्संयोगस्यासमवायिकारणस्य प्रादेशिकत्वात् तत्र निमित्तकारणसम्बन्ध एव शरणम् । मम तु प्रादेशिकत्वे तच्छरणं येन भविष्यतीति । अनुमानं धर्मिग्राहकमानबाधितमिति चेत् किं तन्मानं येन बाधः स्यात् । व्यासंग इति चेन्न । तस्य करणधर्मत्वेनोपपादितत्वादिति विभुत्वं सिद्धं मनसः ॥

जलतेजोदिशां यथा निरूपितं न परैस्तथैवाभ्युपगमः । पृथिव्यादीनि तु नित्यानि । सुवर्णस्य पार्थिवत्वं प्रसाधितमेव । गुणास्तु यथापराभ्युपगतम् अङ्गीकृता एव ॥

प्राभाकरमते पृथक् कर्म त्वतीन्द्रियम् । संयोगविभागदर्शनेन त्वनुमीयते । चलतीति प्रत्यक्षस्य संयोगविभागावेव विषयः । भट्टस्य तु कर्म प्रत्यक्षमेव ॥

सामान्यं तु यथानिरूपितमभ्युपेतम् । प्राभाकरस्य तु सत्तासामान्यं प्रमेयत्वमेव । सङ्ख्यानव्यङ्ग्या जातिर्गोत्वादिरभ्युपेयते । तत्र द्रव्यत्वादिरुपाधिरूपः । भाट्टमते सादृश्यं सामान्यमेव । यथाहुः —

"सामान्यान्येव भूयांसि गुणावयवकर्मणाम् ।
भिन्नप्रधानसामान्यवृत्तिसादृश्यमिष्यते ॥"

इति । यथा शुक्लः पटः तथा कम्बलोऽपीति गुणसाम्यात् । यथा गौः तथा गवय इत्यवयवसामान्यात् । वायुवद् धावत्यश्व इति कर्मसामान्यात् । प्राभाकरमते सादृश्यं पदार्थान्तरमेव ॥

इति पदार्थनिरूपणम् ॥

---

## अथ प्रामाण्यं निरूप्यते ।

अबाधितासन्दिग्धानधिगतार्थगन्तृ प्रमाणम् । तदुक्तमाचार्यैः —

"तस्माद् दृढं यदुत्पन्नं न विसंवादमृच्छति ।
ज्ञानान्तरेण विज्ञानं तत् प्रमाणं प्रतीयताम् ॥"

इति। प्रमितिः प्रमाणमिति व्युत्पत्त्या फलस्यैव लक्षणमुक्तम्। अर्थात् करणस्यापि सिध्यति। तत्र दृढमिति सन्देहनिरासः। उत्पन्नमिति अनुत्पन्नत्वलक्षणाज्ञानानिरासः। ज्ञानान्तरेण न विसंवादमृच्छतीत्यनेनाबाधितत्वमुदितम्। एवंभूतं विज्ञानं प्रमाणमित्यर्थः।

अप्रामाण्यं त्रिविधम्। तदुक्तम्—

"अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः।"

इति। तत्प्रमाणं तु षोढा। प्रत्यक्षानुमानोपमानागमार्थापत्त्यभावभेदात्। प्रत्यक्षं तु द्विविधं समं नैयायिकैः। योगिनस्तु न सन्ति। तेषां सत्त्वेऽपि दूरसूक्ष्मादियोग्यदर्शनमेव। नत्वतीन्द्रियार्थद्रष्टृत्वम्। यथाहुः—

"यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता॥"

इति। यथा गृध्रादयो दूरात् सूक्ष्मं पश्यन्ति तद्वदिति भावः। नच तत्र मानं पश्यामः। नन्वदृष्टादिकं कस्याचित् प्रत्यक्षं दृष्टं मेयत्वादिति मानमिति चेद्। न। कस्यचिच्छब्देनास्मदादयो योगिनो वा विवक्षिताः। नाद्यः। बाधात्। न द्वितीयः। तदप्रसिद्धेः। अनेनैव प्रसिद्धावितरेतराश्रयत्वात् पक्षे अनुगतधर्माभावाच्च। ततो योगिनः सन्ति। ननु प्रमाणसामान्यलक्षणमव्यापकम्। प्रत्यक्षधारावहनबुद्धावव्याप्तेः। तथानेकशाखासु एककर्मबोधकस्य वाक्यस्याप्रामाण्यापत्तेः, एकेन बोधितस्यापरेण बोधनादनधिगतत्वाभावादिति चेत्। मैवम्। धारावहनबुद्धौ सूक्ष्मकालवैशिष्ट्यस्य वा ज्ञाततायुपाधिविशिष्टस्य वानधिगतस्य सम्भवात्। सूक्ष्मकालाकलने शतपत्रव्यक्तिभेदे यौगपद्याभिमानो न स्यादिति चेत्। सत्यम्। विचारकस्य क्रियाविभागादिन्यायाभिज्ञस्य यौगपद्याभिमानो नास्त्येव। भ्रान्तस्याभिमानो नोदाहरणमर्हति। अनेकशाखाबोधिते चैकास्मिन् कर्मणि प्रथमेनाज्ञातज्ञापने सिद्धे द्वितीयादेरनुवादकत्वेन तत्र प्रामाण्यम्। 'एवं विद्वान् दर्शपूर्णमासैर्यजते' इत्यादिवत्। 'स्वाध्यायोऽध्येतव्य' इति विधिना स्वशाखाध्ययनमेव विहितम्। ततः स्वशाखा प्रमाजनिका। इतरास्त्वनुवादकाः। अनधिगतपदेन स्मृतिव्यावर्तनान्नातिव्याप्तिः। व्याप्यव्यापकांशरूपमनुमानम्। तत्र व्याप्यांशेन व्यापकांशोऽनुमीयते। तच्चान्वयव्यतिरेकि केवलान्वयि चेति द्विविधम्। केवलव्यतिरेकि तु न प्रमाणमतिप्रसञ्जकत्वादित्याहुः॥

वनं गतस्य गवयं दृष्ट्वा अनेन सदृशी मदीया गौरिति ज्ञानमुपमानम् । आकाङ्क्षादिमत्पदकदम्बकं वाक्यमागमः । श्रुतार्थापत्तिरागम एव । दृष्टार्थापत्तिः पृथक् प्रमाणम् । अर्थापत्तौ व्याप्तिज्ञानापेक्षा नास्तीति पृथक् प्रमाणमिति केचित् । केवलव्यतिरेकव्याप्त्यपेक्षत्वाद् भिन्नमिति केचित् । अनुपलब्धिश्च पृथक् प्रमाणम् । उपलब्धिर्ज्ञानं तदभावोऽनुपलब्धिः । सा पृथक् प्रमाणम् । तदुक्तम् —

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायतेऽन्यानपेक्षया ॥"

इति । अन्यदिन्द्रियादि (न) तदपेक्षयेत्यर्थः । इन्द्रियव्यापारानुविधानं च भूतलाद्यधिकरणग्रहणजनने अन्यथासिद्धम् । एकस्मि(न्ना ? न्न)नुपलब्धे ज्ञाने ज्ञातकरणत्वमज्ञातकरणत्वं (च) कथमिति चेद् । न । एकस्मिन् ज्ञानाख्ये कार्ये ज्ञाताज्ञातकरणत्ववदुपपत्तेः । ज्ञाताज्ञातत्वविशेषं विहायानुपलब्धिमात्रेण एकाकारत्वोपपत्तेश्च । किञ्च अज्ञातैवानुपलब्धिः करणमनुपलब्धौ तु ज्ञाता । ननु चैत्रो गृहे निपुणतरमनुसृतो मया नोपलब्धः इत्याप्तादुपश्रुत्य श्रोता ज्ञातानुपलब्ध्या नाभूच्चैत्र इति निश्चिनोति । ततो ज्ञातानुपलब्धिरपि करणमिति चेद् । न । तत्र ह्यनुपलब्धिर्न पृथक् प्रमाणम् । किन्त्वनुमानत्वेनैवेति न दोषः । इह भूतले घटो नास्तीत्यादावेव ज्ञातानुपलब्धिः । पार्थक्येन पृष्टः चैत्रो गृहेऽभूदिति, तदैव किञ्चित् स्मरन् चैत्रानुपलब्ध्यैव तदभावं ज्ञात्वा ब्रूते नाभूदिति । तत्र नेन्द्रियगृहसन्निकर्षः, गृहस्य विप्रकृष्टत्वात् । नापि स्मर्तुं योग्यः, स्मरणाभावेन चैत्रानुपलब्धिमनुमाय तया चैत्रनास्तितानुमानमिति युक्तम् । स्मरणाभावस्यानुपलब्ध्या व्यभिचारात् । कश्चिदुपलब्धोऽपि संस्कारविनाशान्न स्मर्यते, तत्र स्मरणाभावोऽस्ति नानुपलब्धिरिति व्यभिचारः । अतः परिशेषादनुपलब्धिरेव करणम् । नच शब्दादिस्तत्रास्ति । अतोऽसङ्कीर्णमुदाहरणमिदमेव । तथाहुः —

"स्वरूपमात्रं दृष्ट्वा तु पश्चात् किञ्चित् स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥"

इति । तस्मादज्ञातानुपलब्धिः पृथक् प्रमाणम् । अन्तर्भावसाधकान्यनुमानानि यथायथं प्रतिकूलतर्कपराहत्यादिना दूषणीयानि ।

एतत्सर्वं मनसि निधायाह सूत्रकारः— 'अथातो धर्मजिज्ञासे'ति । 'स्वाध्यायोऽध्येतव्य' इति विषयवाक्यम् । मीमांसा आरम्भणीयानारम्भणीयेति संशयः । तदर्थमपरा चिन्ता — अध्ययनविधिरदृष्टार्थो दृष्टार्थो वेति । तदर्थमपरा चिन्ता— अध्ययनविधिरक्षरग्रहणपर्यन्तोऽर्थावबोधपर्यन्तो वा एवं सन्देहे पूर्वपक्षः — अक्षरग्रहणेनैवाध्ययनस्य चरितार्थत्वात् तस्य चादृष्टद्वारा स्वर्गफलत्वात् फलान्तरापेक्षाभावाद् अध्येतव्य इति विधेरध्ययनमात्रपर्यवसानात्, एवंकाम इत्यादेरश्रवणेन फलान्तरस्य कल्पयितुमशक्यत्वाच्च अक्षरग्रहणानन्तरं स्नातव्यमित्यर्थावबोधार्थं न मीमांसारब्धव्येति । एवं प्राप्ते सिद्धान्तः—गृहीतवेदराशेर्निरर्थकत्वायोगाद्, अर्थस्य च विचारसाध्यत्वात्, विचारस्य च मीमांसारूपत्वात्, दृष्टेऽर्थावबोधे सम्भवत्यदृष्टार्थकल्पनायोगात्, 'यं यं क्रतुमधीते तेन तेन हास्य क्रतुनेष्टं भवती'त्यादिवाक्यशेषे फलश्रवणाद् अर्थावबोधमन्तरेण तदवगमायोगात्, अर्थावबोधकामोचितेति कल्पनाद् अक्षरग्रहणमात्रान्न स्नातव्यं, किन्तु मीमांसारब्धव्येति ।

ननु अध्ययनविधेर्भावनाभावात् कथं विधित्वम् । तथाहि— यजेतेत्युक्ते भावनाद्वयं प्रतीयते । एका शब्दभावना अपरार्थभावना । लिङाकारेण शब्दभावना प्रतीयते । यतो यजेतेति लिङ्श्रवणानन्तरमहमनेन प्रवर्तित इति पुरुषस्य धीरुपजायते । प्रवर्तना हि शब्दभावना । अभिधा भावनेत्यर्थः । तिङाकारेणार्थभावनोच्यते इति तिङाकारः । यथाहुः —

"अभिधां भावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातैर्निगद्यते ॥"

इति । अर्थभावना पुरुषप्रयत्नः । किं भावयेत् केन भावयेत् कथं भावयेत् (इति) फलकरणेतिकर्तव्यताभेदात् अंशत्रयवती भावना । तत्र शब्दभावनाया अर्थभावना भाव्यांशः । ज्ञाता लिङ्करणांशः । अर्थवाद इतिकर्तव्यतांशः । अर्थभावनाया यागेन स्वर्गं भावयेदित्यादौ स्वर्गादिफलं किमंशः, यागादिः धात्वर्थः, करणांशः प्रयाजादिः, करणोपकार इतिकर्तव्यतांशः । तथा च प्रया-

जादिभिरुपकृत्य यागेन स्वर्गादि भावयेदित्यर्थो भवति। तथा अध्ययनविधौ भावनाद्वयं कथमिति चेदेवं, सावधानमनाः शृणु। 'स्वाध्यायोऽध्येतव्य' इति तव्यप्रत्ययेन स्वाध्यायमधीयीतेति लिङ्प्रत्ययेन च शब्दभावनया स्वाध्यायपदवाच्यमध्यमस्थाः सर्वे लिङादयः प्रेर्यन्ते अर्थलाभादिभिः प्ररोचनां कृत्वा लिङादिभिः पुरुषः प्रवर्तनीय इति। अर्थभावनया पुरुषोऽर्थावबोधे नियुज्यते। अध्ययनेन मीमांसयोपस्मृत्य स्वाध्यायार्थबोधं भावयेदिति। अतोऽत्रापि द्विविधभावनासद्भावान्नास्ति कश्चिद् दोष इति।

एवं प्रथमाध्यायप्रथमचरणेन चोदनादिसूत्रसन्दर्भेण धर्मे वेदस्य प्रामाण्यं प्रत्यक्षादीनाञ्चाप्रामाण्यं प्रसाधितम्। द्वितीयेऽर्थवादमन्त्राणां विध्येकवाक्यतया प्रामाण्यमसीषिधत् सूत्रकारः। 'सोऽरोदी(दि)'त्यादयोऽर्थवादाः, 'उरु प्रथस्वे'त्यादयश्च मन्त्राः। तृतीये च स्मृत्याचारयोः प्रामाण्यं साधितम्। स्मृतयस्तु 'अष्टकाः कर्तव्या' इत्यादयः। आचारस्तु होलाकादिः। चतुर्थेन 'अग्निहोत्रं जुहोति' 'उद्भिदा यजेते'त्यादिनामधेयानां प्रामाण्यं समर्थितम्। एवं प्रथमलक्षणे प्रमाणनिर्णयः। द्वितीये लक्षणे शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयैः षट्प्रमाणैः कर्मभेदो दर्शितः। तत्र यजेत जुहोति ददातीत्यादियजादिशब्दभेदात् कर्मभेदः। भावना यद्यप्येकैव तथापि यजत्यादिवैशिष्ट्यभेदाद्भेदः। तथा अभ्यासादपि कर्मभेदः। यथा 'समिधो यजति', 'इडो यजती'त्याद्यभ्यासात् कर्मभेदः। तथा 'सप्तदश प्राजापत्यान् पशूनालभते' इत्यत्र सङ्ख्यया कर्मभेदः। द्रव्यदेवतयोरेकत्वे कर्मैक्यमाशङ्क्य सङ्ख्यया कर्मभेदः स्थापितः। तथा गुणोऽपि द्रव्यदेवतालक्षणकर्मभेदकः। यथा 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'ति वाजिनामिक्षारूपगुणभेदाद् वाजिनद्रव्यकं कर्मान्तरम्, आमिक्षाद्रव्यकञ्च कर्मान्तरमिति चिन्तितम्। वाजिनं नामामिक्षोत्पत्तिशिष्टमुदकम्। आमिक्षा नाम पयोदधिमिश्रणजनितं दृढाकारं द्रव्यम्। तथा प्रक्रिया प्रकरणम्। तद्भेदोऽपि कर्मभेदकः। यथा 'अग्निहोत्रं जुहोती'त्यत्राग्निहोत्रशब्दोऽस्ति। कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोती'त्यस्ति। तदुभयमेकमेवेत्याशङ्क्य प्रकरणभेदात् कर्मभेदः स्थापितः। तथा नामभेदोऽपि कर्मभेदकः। यथा—'अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः

अनेन सहस्रदाक्षिणेन यजेते'त्यत्र नामभेदात् । एवं कर्मभेदो द्वितीयाध्याये निरूपितः ।

तृतीये तु विनियोगविधिर्निरूपितः । तथाहि — उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः प्रयोगविधिश्चेति चतुर्विधो विधिः । 'आग्नेयोऽष्टाकपाल' इत्यादौ द्रव्यदेवतासंयुक्तकर्मस्वरूपबोधको विधिरुत्पत्तिविधिः । 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकाम' इत्यादौ कर्तृसम्बन्धादधिकारबोधको विधिरधिकारविधिः । 'ऐन्द्या गार्हपत्यमुपतिष्ठत' इत्यादावनेनेदं कर्तव्यमिति विनियोगबोधको विधिर्विनियोगविधिः । श्रुत्यादिना साङ्गे प्रधाने बोधिते साङ्गं प्रधानं युगपत् कुर्यादिति कल्प्यविधिः प्रयोगविधिः । तत्र विनियोगः शेषशेषिभावः तृतीये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानैर्बोध्यते । तत्र 'ऐन्द्या गार्हपत्यमुपतिष्ठत' इतीन्द्रपदवत्या ऋचा गार्हपत्योपस्थानं श्रुत्यावगम्यते । पदान्तरनिरपेक्षः शब्दः श्रुतिः । तत्रैन्द्येति तृतीया शेषबोधने समर्था । गार्हपत्यमिति द्वितीया तु शेषिबोधने । एवं सर्वत्र तृतीया शेषिबोधने अनपेक्षा । द्वितीया तु शेषबोधने । तयोस्तु गुणगुणिभावेनान्वयो वाक्यगम्यः । लिङ्गं नाम सर्वपदार्थगतसामर्थ्यम् । 'सर्वभावगता शक्तिर्लिङ्गमि'ति वचनात् । यथा 'बर्हिर्देवसदनं दामी'ति । हे बर्हिर्दर्भमुष्टे ! देवतानां सदनमुपवेशनस्थानं (किं ?) त्वां दामि लुनामीत्यर्थः प्रतीयते । तेन पदार्थसामर्थ्यं दर्भमुष्टिच्छेदने प्रतीयते । अतो बर्हिर्लवने लिङ्गेनायं मन्त्रो विनियुज्यते । एवम् 'उरु प्रथस्वे'ति मन्त्रः पुरोडाशप्रथने । एवं देवताप्रकाशकाश्च ते ते मन्त्रा अग्निर्मूर्धादयः । तेऽपि लिङ्गेनैव देवताप्रकाशने विनियुज्यन्ते । तथाच मन्त्राणां विनियोगो लिङ्गप्रमाणगम्यः । साकाङ्क्षं पदद्वयं वाक्यम् । तच्च विनियोजकम् । यथा — 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती'ति वाक्यात् पर्णकायाः पलाशस्य जुह्वा घृतहोमपात्रस्य शेषत्व प्रतीयते । जुहूः शेषी । पलाशः शेषः । दर्शपूर्णमासादिप्रधानवाक्यं 'समिधो यजती'त्याद्यङ्गवाक्याकांक्षायुक्तं प्रकरणम् । तत्र प्रधानमारभ्याङ्गानामधीतत्वात् प्रकरणमेव तत्राङ्गाङ्गिभावबोधकम् । दर्शपूर्णमासः प्रधानं, प्रयाजाद्यङ्गमिति विनियोजने प्रकरणमेव । स्थानं सन्निधिः क्रम इति पर्यायः । यथा—देवताकाण्डे अग्न्यग्नीषोमादिदेवताः क्रमेण प्रपद्यन्ते । मन्त्रकाण्डे तु

मन्त्राः क्रमेण पठ्यन्ते । तत्र स्थानप्रमाणेन प्रथमदेवतायागस्य प्रथमो मन्त्रः, द्वितीयस्य द्वितीयः तृतीयस्य तृतीय इति बोध्यते । समाख्या याज्ञिकप्रसिद्धिः । 'इदं श्रीसूक्तम्' 'इदं पुरुषसूक्तमि'त्यादिप्रसिद्ध्या तत्तत्प्रीत्यर्थं तत्तत् पठनीयमिति विनियुज्यते । एवं षड्भिः प्रमाणैः विनियोगस्तृतीये प्रदर्शितः ॥

चतुर्थे च क्रत्वर्थपुरुषार्थविचारः कृतः । यथा — 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती'त्यत्र पिण्डपितृयज्ञः दर्शपूर्णमासाङ्गं वा स्वयं पुरुषार्थो वेति सन्दिह्यामावास्याकालेऽभिहितत्वात् तदङ्गमिति पूर्वपक्षयित्वा राद्धान्तितम् — अङ्गाङ्गिभावबोधकश्रुत्यादिप्रमाणाभावादनारभ्याधीतत्वाच्च नाङ्गम् (इति) । ननु फलाभावात् कथं पुरुषार्थ इति चेन्न । 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादि'ति न्यायेन स्वर्गस्यैव फलत्वात् । अतः फलवत्त्वात् पुरुषार्थ एवेति विचारितम् ॥

पञ्चमे तु क्रमविचारः कृतः । कर्मणामङ्गाङ्गिभावे निश्चिते साङ्गं प्रधानं युगपत् कुर्यादिति प्रयोगविधिना यौगपद्ये विहिते सर्वस्य युगपत् कर्तुमशक्यत्वात् क्रमेण एकानुष्ठानतया कर्तव्यत्वे प्राप्ते श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिरूपः (?) प्रमाणसिद्धक्रमेण कर्तव्यम् । 'हृदयस्याग्रेऽवद्यति अथ जिह्वायाः अथ वक्षस' इत्यत्र श्रुत्यैव क्रमः । 'अग्निहोत्रं जुहोति' 'यवागूं पचती'त्यत्रार्थक्रमः । पाठक्रमे ह्यङ्गीक्रियमाणेऽग्निहोत्रस्य द्रव्यान्तरमश्रुतं स्वीकर्तव्यं साधनम् । यवागूपाकस्य च दृष्टोपयोगाभावाददृष्टार्थत्वं कल्पनीयम् । तदुभयदोषपरिहारार्थम् अर्थक्रमो द्रष्टव्यः यवागूं पक्त्वाग्निहोत्रं जुहोतीति । तथा च द्रव्यान्तरकल्पनादृष्टार्थत्वदोषौ न भवतः । समिदाद्यङ्गयागानां यथा पठनं तेनैव क्रमेण कर्तव्यम् । ज्योतिष्टोमे प्रातरग्नीषोमीयः, मध्याह्ने सवनीयः, सायम् अनुबन्ध्यः पशुरिति पशुत्रयं क्रमेणालम्भनीयम् । तद्विकारे साद्यस्क्रयागे सवनीयपशुस्थाने 'सह पशूनालभत' इति श्रूयते । तत्र त्रयाणां यौगपद्यायोगात् त्रये सहकर्तव्ये अग्नीषोमीयस्य प्रकृतौ प्राथम्यादिह विकृतावपि सहत्वेन त्रयाणां प्राप्तौ स एव प्रथममालम्भनीय इति प्राप्ते राद्धान्तितं — सवनीयस्थाने पठितत्वात् सहत्वस्य सवनीयपशोः प्राथम्यमितरयोस्त्वैच्छिकः क्रम इति । अथवाग्नीषोमीयस्य प्रकृतौ प्राथम्यात् तस्यैव सवनीयानन्तर्यं, ततोऽनुबन्ध्यः । मुख्ययागक्रमाद-

प्यङ्गयागक्रमः । यथा — सरस्वतीसरस्वद्यागयोः क्रमे तदङ्गानामपि तथैव क्रमः । प्रवृत्त्यापि क्रमः । 'सप्तदश प्राजापत्यान् पशूनालभत' इत्यत्र सप्तदशापि पशवो यूपेषु बद्धाः । तत्र प्रोक्षणाभ्युक्षणादयः पदार्थाः कर्तव्याः । तत्र केन क्रमेणेति विशये प्रथमतः प्रमाणान्तराभावावि(द्वौ ? ह श्रौ)त एव क्रमः, द्वितीयादिपदार्थेषु इच्छैव नियामिकास्तु इति प्राप्ते राद्धान्तः— प्रवृत्त्यैव क्रमः, नेच्छया । तथाच कालव्यवधानं स्यात् यदा प्रथमं यत्र प्रोक्षणपदार्थः क्रियते सप्तदशे पशौ तत्रैव । यदादावभ्युक्षणं क्रियते तदा तस्य षोडशपशुप्रोक्षणकालेन न व्यवधानं भवति । यदा त्विच्छया यत्र-कुत्रापि अन्तिमे मध्यमे वा द्वितीयपदार्थः क्रियते तदा प्रथमपदार्थस्याधिकं व्यवधानं भवति । ततो व्यवधानाभावाय प्रथमप्रवृत्तिक्रमेणैव द्वितीयादि कर्तव्यमिति स्थितम् ।

षष्ठे त्वधिकारचिन्ता । 'अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तोऽधिकारी' । अर्थित्वं सुखादिफलार्थित्वम् । तत्तु तिर्यगादिप्राणिनामप्यस्ति । तन्निरासाय समर्थ इति । देहेन्द्रियबलं सामर्थ्यम् । तत्र कर्मकरणशक्तियोगः । अर्थी समर्थोऽप्य(य)ज्ञानधिकारीति दर्शितं विद्वानिति । वेदवेदाङ्गाभिज्ञो विद्वान् । ततः सर्वं शूद्रेऽपि घटयेत् । अत उक्तं — शास्त्रेणापर्युदस्त इति । शूद्रस्तु 'शूद्रो यज्ञेऽनवक्लृप्त' इति शास्त्रेण निरस्तः । एवंविधस्वर्गपशुपुत्रादिकामोऽधिकारीति षष्ठे निरूपितम् । इदं पूर्वषट्कं उपदेश इत्युच्यते । उपदेशो नाम साङ्गकर्मनिरूपणम् । उत्तरषट्कमतिदेश उच्यते । अतिदेशो नाम कर्मस्वरूपमात्रानिरूपणम् । यथा 'सौर्यं चरुं निर्वपेदि'ति ।

'प्रकृतिवद्विकृतिः कर्तव्ये'ति सामान्यातिदेशः सप्तमे । प्रकृतिः साङ्गोपदेशः । तत्र ये धर्माः प्रयाजादय उपदिष्टाः येन क्रमेण, तेनैव क्रमेण ते धर्माः विकृतौ स्वरूपमात्रे कर्मणि कर्तव्याः ।

विशेषातिदेशस्त्वष्टमे निरूप्यते । तत्र सर्वासामिष्टीनां दर्शपूर्णमासेष्टिः प्रकृतिः । तद्धर्मा विकृतीष्टिषु कर्तव्याः । सोमयागानां ज्योतिष्टोमः प्रकृतिः । तद्धर्मा विकृतिसोमयागेषु रात्रिसत्रादिषु कर्तव्याः । पशुयागानां सर्वेषामग्नीषोमीयः प्रकृतिः । तदङ्गानि विकृतिपशुयागेषु कर्तव्यानि । अहर्गणानां द्वादशाहः प्रकृतिः । तदङ्गान्यन्यत्र सत्रान्तेष्वनुष्ठेयानि । एतदष्टमे निरूप्यते ॥

नवमे ऊहो निरूप्यते । यथा — आग्नेये प्रकृतौ 'अग्नये जुष्टं निर्वपामी'ति निर्वापः क्रियते । विकृतौ सौर्ययागे 'सूर्याय जुष्टमि'त्याद्यूह्यते ।

दशमे बाधनिरूपणम् । सामान्यतोऽतिदेशेन प्राप्तो धर्मो विशेषेण बाध्यते । यथा—'बर्हिः स्तृणाती'त्यत्र दर्भपरिस्तरणे प्राप्ते आभिचारिककर्मणि 'शरमयं बर्हिर्भवती'त्यनेन बाध्यते । 'प्राजापत्याञ्छत कृष्णलान् निर्वपेदि'त्यत्र कृष्णलादीनां व्रीह्याकारसुवर्णानां निर्वापे तेषामवहननप्राप्तौ वैतुष्यद्वाराभावादवहननबाधः ।

सकृदनुष्ठानेन बहूनामुपकारकलक्षणं तन्त्रम् । तन्निरूपणमेकादशे । यथा — 'आग्नेयोऽष्टाकपालः पुरोडाशः' 'ऐन्द्रं दधि' 'ऐन्द्रं पय' इति त्रयाणां यागानां पञ्च प्रयाजाः सकृदनुष्ठिता उपकुर्वन्ति । तदेव तन्त्रेणानुष्ठितमुच्यते ॥

द्वादशे तु प्रसङ्गेनोपकारासिद्धिनिरूपणं क्रियते । यथा—लोके आम्रमूले पितॄणां तर्पणे कृते आम्रमपि सिक्तं भवति पितरश्च तृप्ता भवन्ति । तथा च पितृतर्पणप्रसङ्गेनाम्रसेकः, एवं गोदोहनेन पशुकामस्य । अपां प्रणयने 'चमसेनापः प्रणयेत्' 'गोदोहनेन पशुकामस्ये'ति वाक्येन विहिते पशुकामस्य यदप्प्रणयनं तद्दर्शपूर्णमासयागयोरप्युपकरोति । स च प्रसङ्गः । एवंविधविचारो द्वादशे निरूपितः । तृतीयषष्ठदशमाध्यायाः पादाष्टकवन्तः । अतः शराभध्याया उच्यन्ते । इतरे पादचतुष्टयवन्तः ॥

मीमांसासागरं विद्वान् समुत्तर्त्तुं क ईश्वरः ।
एकदेशानुसरणं कृतं मन्दविबुद्धये ॥
पदवाक्यप्रमाणज्ञो माधवाख्यसरस्वती ।
मीमांसादर्शने कश्चिदकरोत् सङ्ग्रहं सुधीः ॥

---

अधुनोदीर्यते सांख्ययोगयोर्मतमुत्तमम् ।
माधवाख्यसरस्वत्या बालानां बोधसिद्धये ॥

तन्मते प्रधानं सत्त्वरजस्तमोगुणात्मकं जगत्कारणम् । पुरुषस्तु कूटस्थनित्य उदासीनः । परिणामिनित्यं प्रधानं प्रकृतिरिति पर्यायः । जगदाकारेण परिणममानमपि न नश्यति परिणामिनित्वम् । पञ्चविंशतितत्त्वा नाम पदार्थाः । यथाहः —

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"

इति । मूलप्रकृतिरादिकारणम् । सा न विकृतिर्विकाररूपा न भवति । कार्यरूपा न भवतीत्यर्थः । मूलत्वादेव तस्या न मूलान्तरापेक्षा । अतो न विकृतिरिति भावः । महदाद्याः, महत्तत्वं बुद्धिः । आदिपदादहङ्कारः शब्दस्पर्शरूपरसगन्धतन्मात्राणि । एतानि प्रकृतयो विकृतयश्च । उत्तरोत्तरस्य कारणत्वात् प्रकृतिः । पूर्वपूर्वकार्यत्वाच्च विकृतयः । एता अष्ट प्रकृतय उच्यन्ते । मूलप्रकृतिं विहाय सप्त । विकृतयोऽपि श्रोत्रत्वगक्षिजिह्वाघ्राणवाक्पादपाणिपायूपस्थमनांसि एकादशेन्द्रियाणि पृथिव्यादीनि पञ्च भूतानीति षोडश विकाराः । पुरुषस्तूदासीनत्वान्न प्रकृतिः नित्यत्वान्न विकृतिरित्यर्थः । नन्वत्र महदादयः किमर्थं कल्पनीया इति चेत्, पुरुषस्य विषयसम्बन्धार्थम् । पुरुषस्य विषयसम्बन्धः स्वभावान्न भवति । चिद्रूपस्य तस्य विषयसम्बन्धस्वभावत्वे अनिर्मोक्षप्रसङ्गात् । विषयसम्बन्धनिवृत्तिर्हि मोक्ष इत्युच्यते । स्वभावस्य निवर्तयितुमशक्यत्वात् अनिर्मोक्ष एव पुरुषस्य स्यात् । न चेष्टापत्तिः । श्रुतिमन्त्रविरोधात् । कोऽयं मन्त्र इति चेदाकर्णय । 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य' इति । अस्यार्थः — न जायत इत्यजा प्रकृतिः । सा चैका मूलकारणत्वात् । लोहितं रजोगुणः । शुक्लं सत्त्वगुणः । कृष्णं तमोगुणः । एतत्त्रितयरूपा । सरूपाः लोहितादिसमानरूपाः । बह्वीः बहुलाः प्रजाः सृजमाना सृजन्ती । एवम्भूतामजां प्रकृतिम् । एकः अजः पुरुषः । भुक्तभोगां भुक्तः भोगः यया, पुरुषः संसारीकृतो ययेत्यर्थः, तां जहाति । प्रकृतिपुरुषाविवेकात् संसारः, तद्विवेकान्मुक्त्या भवितव्यम् । अतो निर्मोक्षो नेष्टापत्तिः । तर्हि प्रकृतिरेव साक्षात् पुरुषसम्बन्धिनी भवतु तत्र नोक्तदोष इति चेत्, तत्रापि स एव दोषो निर्मोक्षप्रसङ्गरूपः । प्रकृतेर्नित्यत्वात् सम्बन्धस्यापि विनाशाभावात् स्वभावस्य दुरपह्नवत्वात् । तर्हि घटादयो विषया एवाहत्य पुरुषचैतन्यसम्बन्धा भवन्त्वित्यपि न घटेत । तदा घटादेश्चिति सम्बन्धस्वभावस्य दुरपनेयत्वादिन्द्रियसंयुक्तदशायामिवासंयुक्तदशायामपि प्रकाशप्रसङ्गात् । तथा च कदाचिद् दृष्टत्वं कदाचिददृष्टत्वमिति व्यवस्था न स्यात् । तर्हीन्द्रियमात्रप्रणाड्या घटादि-

स्तदीयो भवत्वित्यपि न । तदा युगपत् सर्वैन्द्रियैः शब्दादिविषयेषु सन्निकृष्टेषु शब्दमश्रौषं रूपं नाद्राक्षमिति व्यासङ्गायोगात् । अतस्ततोऽधिकमपेक्षणीयम् । तर्हि मनस्ततोऽधिकमस्त्विति चेत् । न । यदीन्द्रियमनोमात्रेण सर्वविषयाणां पुरुषसम्बन्धित्वं तदा स्वप्नदशायां नरस्यैव सतो मनसा वराहादिरूपे नीते विषयतया पुरुषस्य नरत्वेन सम्बन्धेऽपि अहं नर इति नाभिमन्यते, वराहोऽहं व्याघ्रोऽहमित्येवाभिमन्यते । तत इन्द्रियमनोमात्रेण न निर्वहति पुरुषविषयसम्बन्धः । तर्हि अहङ्कारोऽस्त्वधिकः । स्वप्ने नरत्वेनाहङ्कारो नास्ति, वराहत्वादिना त्वास्ति । ततः स एव विषयः । न नरत्वमिति चेत् । न । तावताप्यसम्भवात् । सुषुप्तिदशायामहङ्काराभावेऽपि निःश्वासप्रश्वासजनकप्रयत्नानवस्थानात् । तथा च तत्प्रयत्नाश्रयत्वेनाधिकं किञ्चिदभ्युपगन्तव्यम् । स एव महान् कर्त्ता । तत्र विहितनिषिद्धकर्मजन्यधर्माधर्मौ । ताभ्यामिष्टानिष्टरूपो विषयः पुरुषसम्बन्धो भवति । अवस्थात्रयेऽपि तदेवैतत् सव्यापारम् । इन्द्रियाणि बाह्यानि जाग्रदवस्थायामेव वर्तन्ते व्याप्रियन्ते च । मनोहङ्कारौ जाग्रत्स्वप्नयोरेव व्याप्रियेते । भावनारूपसंस्कारो महत्येव वर्तते । स्वसन्निकृष्टेन्द्रियद्वारा घटादयो विषया बुद्धिमुपसङ्क्रामन्ति । पुरुषोऽपि तत्र प्रतिबिम्बति । ततश्चैकान्तः करणसङ्क्रान्त्या विषयः पुरुषोपधानीभवति । नन्वन्तःकरणरूपं महत्तत्त्वं चेत् प्रयत्नाश्रयः, तर्हि तेनैव चेतनेन भवितव्यम् । नह्यन्यश्चेतयते अन्यः प्रयतत इति सम्भवति । योऽहं चेतये स एवाहं प्रयत इति सामानाधिकरण्यप्रत्ययविरोध इति चेत् । न । बुद्धिपुरुषयोर्भेदाग्रहान्निष्क्रियेऽपि पुरुषे अन्तःकरणबिम्बिते कर्तृत्वाभिमानः । अचेतनेऽपि महति प्रतिबिम्बितपुरुषाविवेकाग्रहाच्चेतनत्वाभिमानः । भ्रान्तिस्तु साङ्ख्यमते नास्ति । प्राभाकरवदख्यातिवादित्वात् । अतो भेदाग्रह एव विपर्ययव्यवहारकारणम् । अतः प्रयत्नचैतन्ययोः सामानाधिकरण्यं घटते । तात्त्विकस्तु पुरुषे कर्तृत्वं बुद्धौ च चेतनावत्त्वमिति व्यवहारो नास्त्येव । पुरुषस्य पुष्करपलाशवन्निर्लेपत्वात् बुद्धेस्तु जडत्वादिति । ननु स्वभावतः पुरुषस्य निर्लेपस्यापि बुद्धिवशाल्लेपो भविष्यतीति चेत् । न । यथा कमलपत्रमुदकसम्बद्धमपि न तेन लिप्यते तद्वदिति । एवं महदादिकारणानां पृथगेव व्यापार-

सद्भावादवश्यं तानि स्वीकर्तव्यानि । तत्रेन्द्रियाणामस्त्विति प्रथमसन्निपातजं ज्ञानं व्यापारः । विकल्पो मनसः । अविकल्पो निश्चयः । तदुभयमुक्तम् —

"इन्द्रियाणि मनः पश्चाद्विकल्पयति निश्चयात्" ।

इति । अहङ्कारस्याभिमानः स चाहं क्रमकाधिकृत इत्येवंरूपः । बुद्धेश्च कृत्यध्यवसायः । स च कर्तव्योऽयमित्याकारः । तर्हि विकल्पाध्यवसाययोरुभयोरपि निश्चयरूपत्वात् को भेद इति न शङ्कनीयम् । विकल्पस्य विषयनिश्चयरूपत्वात् । कृत्यध्यवसायस्य कृतिजनकेच्छारूपत्वात् । बुद्धिश्च चेतनोपरागविषयोपरागव्यापारावेशरूपांशत्रयवती । सर्वत्र हि मयेदं कर्तव्यमिति त्रितयाकारः प्रतीयते । तत्र मयेति चेतनोपरागो दर्पणस्येव मुखोपरागो भेदाग्रहादतात्त्विकः । इदमिति विषयोपराग इन्द्रियप्रणालिकया बुद्धौ प्रतिबिम्बितो बुद्धिपरिणामभेदो निःश्वासाहतदर्पणस्येव मलिनिमा पारमार्थिकः । कर्तव्यमिति व्यापारादेशः एतदुभयतात्त्विकातात्त्विकायत्तः । तत्रैव व्यापारलक्षणाया बुद्धेर्विषयोपरागो ज्ञानम् । तेन सह यः पुरुषोपरागस्यापारमार्थिकस्य सम्बन्धः, यथा दर्पणप्रतिबिम्बितस्य मुखस्य मलेन सम्बन्धः, सोपलब्धिः । एवं ज्ञानोपलब्ध्योर्भेदः । सुखादयोऽप्याव-प्येतन्निष्ठाः, कर्तृभूतबुद्धिसामानाधिकरण्येन प्रतीयमानत्वात् । नच वाच्यं बुद्धिरेव स्वभावतश्चेतनास्त्विति । परिणामित्वात् । चेतनस्य कूटस्थनित्यत्वादिति । तथाचाचेतनापि प्रकृतिः वत्सविवृद्ध्यर्थं क्षीरमिव पुरुषस्य भोगापवर्गयोः प्रवर्तते । यदा प्रकृतिपुरुषविवेकः तदा मुक्तो भवति । विवेकश्च श्रवणादिना भवति । जगतः प्रधानोपादानत्वे किं प्रमाणमिति चेद् अनुमानं तावत् विमतकार्यजातम् अचेतनोपादानकं, कार्यत्वे सत्यचेतनत्वाद् घटादिवदिति । नच वैशेषिकादीन् प्रति सिद्धसाधनम् । परमाण्वादीनामपि मूलकारणं प्रकृतिरेवेति ॥

यतः तच्च प्रधानं स्वतन्त्रमेवेति तत्प्रेरणाय न चेतनापेक्षा, तस्मान्नेश्वरसिद्धिः ॥

सेश्वरसाङ्ख्या योगसाङ्ख्याश्चेश्वरमङ्गीकुर्वते । अन्यत् सर्वं समानम् । योगशास्त्रेऽपि मोक्षसाधनं योगः । योगाङ्गानि च यमादीनीति तन्निरूप(ण)मधिकम् । योगश्चित्तवृत्तिनिरोधः । यमनियमासनप्राणायामप्रत्याहारध्यानधार-

णसमाधयोऽष्टाङ्गानि । 'अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवामे'त्यादि यमः । तीर्थे चाप्रतिग्रहः सन्ध्यायां मौनं भोजने मौनम् इत्यादिव्रतधारणं नियमः । पद्मस्वस्तिकादीन्यासनानि । रेचकपूरककुम्भकादिः प्राणायामः । रेचकं प्राणवायुविसर्जनम् । पूरकम् अन्तराकर्षणम् । कुम्भकम् आकृष्टस्य तथैव धारणम् । प्रत्याहारो विषयेभ्यो मनोनिवर्तनम् । धारणं हृदादिदेहैकदेशे प्राणधारणम् । ध्यानं तु ध्येयदेवताया विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहसन्ततीकरणम् । समाधिस्तु त्रिपुटीरहितध्येयमात्रपरत्वम् ॥

इति साङ्ख्ययोगनिरूपणम् ॥

---

एवं वैदिकदर्शनानि संक्षेपत उक्तानि । इदानीमवैदिकदर्शनं निरूप्यते । तत्र चार्वाकस्य प्रत्यक्षमेव प्रमाणम् । कायाकारेण परिणतपृथिव्यादिभूतचतुष्टयमेव चेतनः । एकैकभूतस्य चैतन्याभिव्यञ्जकत्वाभावेऽपि समुदितस्य व्यञ्जकत्वम् । यथा मदशक्तिरेकैकपूगीफलादिना न भवति चूर्णपर्णफलेभ्यस्तु भवति तद्वत् । अतीन्द्रियं तु नास्त्येव । स्वर्गादिकमपि प्रत्यक्षसिद्धस्रक्चन्दनादिकमेव । वनिता स्वर्गः चन्दनः स्वर्ग इति प्रयोगदर्शनात् । शरीरत्याग एव मोक्षः । पुण्यपापे न कस्यापि । चतुर्भुजादिप्रतिमादिकमेव देवता । किं बहुना, प्रत्यक्षासिद्धं नास्ति । यथेष्टमेवाचरणीयम् ॥

"यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥"

इति तेषां सिद्धान्तः ॥

इति चार्वाकदर्शनसंक्षेपः ॥

---

जैनमतं निरूपितं वैशेषिकमतनिरूपणवेलायां विपर्ययप्रस्तावात् ॥

बौद्धमतं तु निरूप्यते । ते तु बहुप्रकारा यद्यपि तथा(पि) हीनमध्यमोत्तमभेदात् त्रिधा । बुद्धिवैचित्र्याद्वा त्रिधा । तत्र बुद्धस्य त्रयः शिष्याः । यस्तु हीनाधिकारी तं प्रति अन्तर्बहिश्च सर्वास्तित्वमबोधि । यस्तु मध्यमाधिकारी तं प्रति ज्ञानस्यैवास्तित्वं बोधितम् । यस्तूत्तमाधिकारी तं प्रति

सर्वं शून्यमिति रहस्यं प्रादर्शि । तत्रोत्तमाधिकारिणः साक्षादेव तत्त्वमुपदिष्टम् । हीनमध्यमयोस्तु क्रमेण शून्यतायामेवावतरणं भविष्यतीति तथोपदिष्टम् । तथा च ते बुद्धिवैचित्र्यादधिकारवैचित्र्याद्वा एकमपि तत्त्वं तथा जगृहुः । यथोक्तं बोधिचित्तविवरणे —

"देशना लोकनाथानां सत्त्वाशयवशानुगाः ।
भिद्यन्ते बहुधा लोके उपायैर्बहुभिः पुनः ॥
गम्भीरोत्तारभेदेन क्वचिच्चोभयलक्षणा ।
भिन्नापि देशनाभिन्ना शून्यताद्वयलक्षणा ॥"

इति । लोकनाथानां बौद्धानां देशना आगमाः प्राण्यभिप्रायवशानुसारिण्यः शून्यताप्रतिपत्त्युपायैः क्षणिकत्वसर्वास्तित्वादिभिर्लोके श्रोतृसमुदाये पुनर्बहुधा भिद्यन्ते । भेदमाह — गम्भीरेति । अगाधो गम्भीरः, तद्विपरीत उत्तारः स्थूलदृष्टियोग्यः तद्गुणा । क्वचिद् ग्रन्थप्रदेशे उभयलक्षणा ज्ञानमात्रास्तित्वसर्वबाह्यार्थास्तित्वलक्षणा । तत्र तत्प्रतिपादिनो भिन्नापि देशना शून्यता एवाद्वया तल्लक्षणा । तत्र तात्पर्यवती सती अभिन्नेति श्लोकद्वयार्थः । यद्यपि वैभाषिकेऽप्यपरोऽस्ति । स च सौत्रान्तिकमध्येऽन्तर्भूतः । एतावांस्तयोर्भेदः— अर्थप्रत्ययवैचित्र्याद् बाह्यार्थोऽनुमीयते सौत्रान्तिकैः । वैभाषिकाणां च बाह्यार्थः प्रत्यक्ष इति । तत्र सर्वास्तित्वमतं तावन्निरूप्यते । भूतं भौतिकं चेति । चित्तं चैत्तिकं चेति चतुर्धा । भूतं पृथिव्यादिचतुष्टयम् । भौतिकं रूपादयश्चक्षुरादयश्च । तत्र पृथिवी (पी)वरस्वभावा कठिनस्वभावा वा । आपः स्नेहस्वभावाः । तेजः उष्णस्वभावम् । वायुरीरणस्वभावः । ईरणं प्रेरणम् । एवंस्वभावाः परमाणवः प्रत्येकं पृथिव्यादिरूपेण संहन्यन्ते मिलन्ते । एते कायाकारेण परिणताः संहता उच्यन्ते । असंहतास्त इन्द्रियसन्निकर्षाद् गृह्यन्ते । चित्तचैत्तिकास्त्वेते वक्ष्यन्ते रूपविज्ञानवेदनासंज्ञासंस्काररूपाः पञ्च स्कन्धाः । ते त्वध्यात्मं सर्वव्यवहारास्पदभावेन संहन्यन्ते रूप्यन्ते एभिर्विषया इति इन्द्रियाणि । रूप्यन्ते इति कर्मव्युत्पत्त्या शब्दादयो विषयाः । तेन सविषयाणीन्द्रियाणि रूपस्कन्धः । अहमित्यालयविज्ञानम् । रूपादिविषय इन्द्रियजन्यो दण्डायमानो विज्ञानस्कन्धः, निर्विकल्पकज्ञानरूप इत्यर्थः । रूपस्कन्धस्तु सविकल्पकरूप इति तयोर्भेदः । इष्टानिष्टानुभयसम्बन्धे सति सुखदुःखोदासीनवृत्तयश्चित्तस्यालय-

विज्ञानस्य जायन्ते । स वेदनास्कन्धः विकल्पप्रत्ययः । संज्ञा संसर्गयोग्यः प्रतिभासो यथा—कुण्डली गौरो ब्राह्मणो गच्छतीति संज्ञास्कन्धः । संस्कारस्कन्धस्तु — रागादयः क्लेशाः, उपक्लेशाश्च मदमानादयः, धर्माधर्मौ चेति । एषां समुदायः पञ्चस्कन्धी । ननु भूतभौतिकचित्तचैत्तानि संहन्यन्ते समुदितानि भवन्तीत्युक्तम् । तत्र संहन्ता तव मते कोऽपि भोक्ता वा प्रशासिता वा स्थिरो नास्ति । तत् कथं संहननमिति चेत् , शृणु । अविद्यादीनां परस्परनिमित्तत्वात् संहतिर्घटते । तेन च लोकयात्रोपपद्यते । तस्यां चोपपद्यमानायां न किञ्चिदन्य(दु ? द)पेक्षणीयम् । तथाहि — अविद्या संस्कारो विज्ञानं नाम रूपं षडायतनं स्पर्शनं वेदना तृष्णा उपादानं भवो जातिर्जरा मरणं शोकः परिदेवना दुःखं दुर्मनस्ता इत्येवमविद्यासमूहे परस्परनिमित्तनैमित्तिकभावेन घटीयन्त्रवदनिशमावर्तमाने अर्थाक्षिप्ता संहतिरिति संहन्ता नापेक्ष्यते । अविद्यादेरयमर्थः — पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातुषु षट्सु कायाकारेषु येयमेकसंज्ञा पिण्डसंज्ञा नित्यसंज्ञा सुखसंज्ञा सत्त्वसंज्ञा पुद्गलसंज्ञा मनुष्यसंज्ञा मातृपितृदुहितृसंज्ञा अहङ्कारममकारसंज्ञा, सेयमविद्या अस्य संसारानर्थसम्भारस्य मूलकारणम् । तस्यामविद्यायां सत्यां संस्कारा रागद्वेषमोहाः विषयेषु प्रवर्तन्ते । वस्तुविषया विज्ञप्तिर्विज्ञानम् । विज्ञानाच्च रूपिणो देहोपादानभेदाश्चत्वारः पृथिव्यादयो जायन्ते । तन्नामेत्युच्यते । तानि पृथिव्यादीन्युपादाय कारणत्वेन विकृत्य रूपं सितपीतादिरूपवच्छरीरमभिनिर्वर्तते । तच्छरीरं नाम रूपमुच्यते । षडिन्द्रियाणि षडायतनम् । षट् पृथिव्यादिधातव आयतनानि यस्य कारणवृन्दस्येति व्युत्पत्त्या षडायतनम् । कारणवृन्दानां नामरूपेन्द्रियाणां सन्निपातः स्पर्शः । स्पर्शाद् वेदना सुखादिकाः । वेदनायां सत्यां कर्तव्यमेतत् सुखं पुनर्मयेत्यध्यवसानं तृष्णा भवति । तत उपादानं वाक्कायचेष्टा । ततो भवः । भवत्यस्माज्जन्मेति भवो धर्माधर्मौ । धर्माधर्मकारणकस्कन्धप्रादुर्भावो जातिर्मनुष्यादिः । जन्महेतुका उत्तरे जरामरणादयः । जातानां स्कन्धानां परिपाको जरा । स्कन्धानां विनाशो मरणम् । म्रियमाणस्य मूढस्य पुत्रकादावन्तर्दाहः शोकः । तदुत्थं पुत्रकलत्रादिविषयप्रलपनं परिदेवना । अनिष्टानुभवनं दुःखम् । मानसं च दुःखं दौर्मनस्यम् । मदमानादयश्चोपक्लेशा अविद्यादिषु द्रष्टव्याः । तेऽमी परस्परहेतवः, जन्मादिहेतुकाः अविद्यादयः अविद्यादिहेतुकाश्च जन्मादय इति घटीयन्त्रव-

दनिशमावर्तन्ते । तत्र बाह्याः पदार्था अनुमेयाः । ज्ञाने यस्य पदार्थस्याकारः प्रतीयते स बहिरस्तीत्यनुमीयते । विमतो बहिरस्ति, स्वाकारसमर्पकत्वात् । यद् बहिर्नास्ति तत् स्वाकारसमर्पकं च न भवति यथा नरविषाणमिति । सर्वे पदार्थाः क्षणिकाः क्षणे क्षणे जायन्ते, विरुद्धधर्माध्यासात् । विरुद्धधर्मश्च कुर्वत्त्वाकुर्वत्त्वसमर्थासमर्थत्वादि । यद्येकमेव बीजं क्षेत्रमध्यपतितमकुर्वत् करोति कुसूलस्थं च न करोतीति कथम् । समर्थस्य क्षेपायोगात् । तर्हि स एवायमिति कथं प्रत्यभिज्ञानमिति चेत्, सादृश्यादिति ब्रूमः । क्षणिकघटादिसन्तानवर्तिनां सन्तानिनां क्षणानामत्यन्तसादृश्यात् ज्वालादिप्रत्यभिज्ञानवदिति ग्राह्यम् । चतुर्विधभावनायाः समलचित्तसन्तानोच्छेदे सति निर्मलचित्तसन्तानोत्पादो मुक्तिः । भावना तु दुःखं दुःखं स्वलक्षणं स्वलक्षणं क्षणिकं क्षणिकं शून्यं शून्यमिति निरन्तरचिन्तनम् ॥

विज्ञानमात्रवादी तु योगाचारः । तस्य मते क्षणिकं विज्ञानमेवास्ति, बाह्यं नास्त्येव । अत एव ज्ञानाकाररजते बहिष्ट्वमारोप्यते इदमिति । नेदं रजतमितीदन्त्वमेव बाध्यते । तत्रेदं नेति निषेधो न रजतनिषेधः । रजतं तु बुद्धौ विद्यत एव । ननु विज्ञानस्कन्धमात्रं त्वया कथमुच्यते । यतः प्रमाणप्रमेयप्रमातृप्रमितिषु चतसृषु विधासु सत्त्वस्य पर्यवसितत्वात् । ततश्च तत्त्वं व्यवस्थापयता त्वया चतस्रो विधा अभ्युपगन्तव्या इति चेत् । सत्यम् । बुद्धेरन्याश्चतस्रो विधा न सन्ति । तथापि बुद्धिकल्पितः प्रमात्रादिव्यवहारोऽस्त्येव । तथाहि विज्ञानस्वरूपमेवासत्याकारयुक्तं तत् प्रमेयम् । प्रमेयप्रकाशनं प्रमाणफलम् । तत्प्रकाशनशक्तिः प्रमाणम् । स्वरूपमेव प्रमातृ । एवं विज्ञानमन्तरेण किमपि तत्त्वं नास्तीति योगाचारसिद्धान्तः ॥

माध्यमिकानां तु तत्त्वं शून्यमेव । ते ह्युत्तमाधिकारिणः । शून्यादेवाविद्यावशात् सर्वमारोपितं जायते । 'असदेवेदमग्र आसीदि'ति भवदीयश्रुतिरप्यस्माकं सहायमातनोति । 'कथमसतः सज्जायेते'त्यपि वेदो दूषयतीति चेत् । सत्यम् । पारमार्थिकसत्त्वे तद् दूषणं लगत्येव । अपारमार्थिकत्वे तु तत्र न कोऽपि दोषः । विज्ञानादि सर्वं कल्पितमेव । व्यवहारे क्षणिकत्वादिकं समानमेव । वस्तुतः शून्यमेव तत्त्वं स्थापितम् । प्रमाणप्रमेयप्रमितिप्रमातृरूपाश्चतस्रो विधा अपि शून्यतत्त्वे संवृता अविद्यापरपर्यायाः कल्पिता इति ॥

पदवाक्यप्रमाणज्ञो माधवाख्यसरस्वती ।
चार्वाकजिनबुद्धानां मतं संक्षेपतोऽवदत् ॥

---

गोराष्ट्रदेशोऽखिलराष्ट्रवर्यः
सदाकरो दक्षिणदेशनिष्ठः ।
विराजते सह्यगिरीन्द्रसानौ
यत्रास्ति गोकर्णमहाबलेशः ॥

तद्देशजन्मा यतिरेकदण्डी
सरस्वतीमस्तकमाधवाख्यः ।
विगाह्य नद्यां दिशि दक्षिणस्यां
सोदास्यपुर्यामकरोत् कृतिं सः ॥

अनात्मशास्त्रप्रतिपादनेन
दोषो यदि स्यान्मम नास्ति दोषः ।
वेदान्तशास्त्रेण निराकरिष्णोः
सर्वस्य भेदस्य पुरोदितस्य ॥

---

प्रस्थानभेदत्रयभिन्नमेकं
वेदान्तशास्त्रं परिलोड्य सारम् ।
सङ्गृह्य वक्ष्यामि हिताय मोक्ष-
काङ्क्षावतामात्ममतेश्च शुद्ध्यै ॥

पदवाक्यप्रमाणज्ञो माधवाख्यसरस्वती ।
वेदान्तशास्त्रसारस्य सङ्ग्रहं कुरुते सुधीः ॥

तत्र बादरायणकृतानि सूत्राणि शारीरकमीमांसाशब्दवाच्यानि । शरीरमेव शरीरकम् । कुत्सितं वा शरीरं शरीरकम् । तत्र भवस्तदभिमानी जीवः शारीरकः । तस्य विचारो मीमांसा । जीवः स्वभावतः संसारी उताविद्यया । यदि प्रथमः, तर्हि तस्य न संसृतेर्मोक्षः स्यात् । स्वभावस्यानपायात् । यदि द्वितीयः प्रकारः, तर्हि तस्य ब्रह्मस्वरूपतालक्षणो मोक्षः सम्भवतीत्येवमाकारो विचारः । सा च शारीरकमीमांसा चतुर्लक्षणी । प्रथमं

समसमन्वयलक्षणम् । तत्र चत्वारः पादाः । तेषु प्रथमे वेदान्तवाक्यानां समन्वयप्रतिपादकत्वं विचारितम् । द्वितीयमविरोधलक्षणम् । तत्रेतरशास्त्रविरोधः पर्यहारि । साधनलक्षणं तृतीयम् । तत्र वैराग्यादिमोक्षसाधनानि विचारितानि । फललक्षणं चतुर्थम् । तत्र मोक्षस्वरूपविचारः कृतः । अधिकरणसङ्ख्या तु शारीरकस्य । चित्सुखाचार्यैरुक्ता त्रिणवत्युत्तरशतमाधिकरणम् । तत्रापि प्रथमेऽध्याये एकचत्वारिंशदधिकरणानि । द्वितीये सप्तचत्वारिंशत् । तृतीये सप्तोत्तरषष्टिः । चतुर्थे अष्टोत्तरत्रिंशत् । यद्यपि नित्याध्ययनविधिना 'स्वाध्यायोऽध्येतव्यः' इत्यनेनाधीतवेदवेदान्तस्य इह जन्मनि जन्मान्तरे वा ईश्वरार्पणबुद्ध्या सत्कर्मावदातस्य शुद्धमनस आपाततो वेदान्तेषु 'आत्मनस्तु कामाय सर्वं प्रियं भवती'ति श्रुत्वा, पुत्रकलत्रादेः सर्वतो विरक्तस्य 'एतावदरे! खल्वमृतत्वमि'ति ज्ञानस्यामृतत्वं श्रुत्वा, उपचाराज्ज्ञानममृतत्वं साधनमित्यवगच्छतः 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्वा, तदात्मानिदर्शनं द्रष्टव्य इत्यनूद्य श्रवणादिसाधनं विधीयत इति भवति मतिः । तथापि न्यायेनैव तन्निर्णय इति बादरायण आचार्यो मीमांसां शारीरकस्य प्रणिनाय । तस्या उपवर्षाद्याचार्यविनिर्मिता अनेका वृत्तयः सन्ति । तत्राद्वैतपरत्वं न सम्यक् प्रत्यपादि इति मत्वा शङ्करभगवत्पूज्यपादाः सर्वान् मुमुक्षूननुगृह्णन्तः शारीरकस्य केवलाद्वैतपरत्वं निर्णेतुकामा भाष्यं प्राणैषुः । तच्च नवसहस्रम् । तत्तात्पर्यं विवरीतुकामा भाष्यकारस्य शिष्याः पद्मपादाचार्यास्तस्य भाष्यस्य टीकां कृतवन्तः । सा च केनचिद् दुष्टेन नाशिता सर्वा । चतुस्सूत्रीमात्रा अस्या अवशिष्टा । पुनरपि तैर्निर्मिता पञ्चपादानां जाता । तत्र सर्वशास्त्रसङ्ग्रहरूपायाश्चतुस्सूत्रीटीकाया विवरणं चक्रुर्विवरणाचार्याः । तत्र विवरणे चतुर्लक्षणी विशदा दृश्यते । तट्टीका अनेका नरेन्द्रगिर्यादिनिर्मिताः । इयं पञ्चग्रन्थी एकं प्रस्थानम् । अपरा तु भाष्यस्य वाचस्पतिमिश्रविरचिता भामती द्वादशसाहस्री । तस्याः कल्पतरुर्व्याख्या पञ्चदशसाहस्री । इयं चतुर्ग्रन्थी अपरं प्रस्थानम् । अपरं तु वार्त्तिकप्रस्थानम् । तस्य काण्वशाखागतबृहदारण्यकश्रुतिर्मूलम् । श्रुत्याः शङ्करभाष्यं नवसाहस्रम् । एतस्य शङ्कराचार्यशिष्यसुरेश्वराचार्यनिर्मितं द्वादशसाहस्रं वार्त्तिकम् । तस्यानन्दगिर्याचार्यनिर्मिताष्टचत्वारिंशत्साहस्री टीका । एवं

वार्त्तिकविवरणवाचस्पतिसंज्ञकं प्रस्थानत्रयम् । स्वीयमतिविशेषस्य तत्र दर्शितत्वात् प्रस्थानत्रयम् । तथा भाष्यस्य प्रकटार्थन्यायनिर्णयादिटीकाः सन्ति । तदेतेषां सारं विलोक्यात्मबुद्धिशुद्धये मुमुक्षूणां हिताय च सर्वानात्मदर्शननिरूपणजनितदोषपरिहाराय च संक्षेपतो वेदान्तशास्त्रं वदामि । तत्रायं परमार्थः —

गलितनिखिलभेदं स्वप्रकाशस्वरूपं
निखिलजगदधीशं भ्रान्त्यधिष्ठानभूतम् ।
परमसुखनिधानं सत्यमद्वैतभावं
नमत भजत भक्त्या तं परात्मानमाद्यम् ॥

ननु किमस्य शास्त्रस्यानुबन्धचतुष्टयम् । को विषयः । किं प्रयोजनम् । कोऽधिकारी । कः सम्बन्धः ।

"ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥"

इति न्यायात् प्रयोजनसम्बन्धौ वक्तव्यौ । विषयश्चावश्यं वाच्यः । प्रतिपाद्यस्याज्ञाने प्रेक्षावतां प्रवृत्त्यसम्भवात् । अधिकारिविशेषश्च वेदितव्यः । नहि सर्वं शास्त्रं सर्वाधिकारं सम्भवति । तथा सति चिकित्साकामस्य व्याकरणेऽधिकारप्रसङ्गात् । शब्दसाधुत्वकामस्य वैद्यशास्त्रे प्रवृत्तिप्रसङ्गात् । ततोऽवश्यमनुबन्धा वक्तव्या इति चेत् । सत्यम् । अज्ञाततत्त्वम्पदार्थयोरैक्यं वेदान्तस्य विषयः । अज्ञानं च त्वदुक्तमर्थं न जानामि मामन्यं च न जानामीति साक्षिवेद्यम् । तद्विषयश्च तत्त्वंपदार्थयोरैक्यं शास्त्रस्य विषयः । तत्त्वंपदार्थयोरैक्यं ज्ञातं प्रयोजनम् । तत्सिद्ध्यर्थमेव वेदान्तवाक्यविचारः क्रियते । साधनचतुष्टयसम्पन्न एवाधिकारी । साधनं च प्रथमं नित्यानित्यवस्तुविवेकः । स च युक्त्या सामान्यतो भवति जिज्ञासोः । अनित्यं कार्यं दृष्टमनुमितं च किञ्चिन्नित्यमन्तरेण न सम्भवतीति नित्यमात्रं तत्कारणतयानुमिनोति । तद्विशेषं च जिज्ञासते किं चेतनमचेतनं वेति । इहामुत्रभोगविरागो द्वितीयं साधनम् । स चापाततः श्रुतिसिद्धः । 'तद् यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते' 'प्लवा ह्येते अदृढा यज्ञरूपा

अष्टादशोक्तमवरं येषु कर्म'त्यादिश्रुतेः। तत्रापि विशेषं जिज्ञासते—किं मुख्येयं श्रुतिरुतोपचारार्थेति। तृतीयं साधनं शमदमादिसाधनसम्पत्। सा च'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदि'ति श्रुतिसिद्धा। चतुर्थं साधनं मुमुक्षुत्वम्। तत् स्वानुभवसिद्धम्। विषयग्रन्थयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः। ग्रन्थप्रयोजनयोः साध्यसाधनभावः सम्बन्धः। इत्यनुबन्धचतुष्टयसद्भावादारम्भणीयं शास्त्रम्। तत्राद्वितीयं ब्रह्मैव तत्त्वम्। 'एकमेवाद्वितीयं ब्रह्म', 'नेह नानास्ति किञ्चन' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'द्वितीयाद्वै भयं भवति' इति द्वैतानिषेधात्। श्रुत्यनुग्राहकस्तर्कोऽप्यभिधीयते। तत्रात्मानो जीवशब्दिताः परमात्मनो न तत्त्वतो भिद्यन्ते, आत्मत्वात् परमात्मवत्। कथं पुनर्जीवपरमात्मनोरभेदे तात्त्विके संसार्थसंसारिभावः किञ्चिज्ज्ञत्वसर्वज्ञत्वादिभावश्च। जीवानां परस्परं पण्डितमूर्खादिभावश्च असङ्गत इति चेन्न। बिम्बप्रतिबिम्बयोः प्रतिबिम्बानां च तात्त्विकेऽप्यभेदे मिथ्याभेदप्रतिभासवदुपपत्तेः। अभेदे 'तत्त्वमस्या'दिश्रुतिरेव प्रमाणम्। तस्या उपक्रमोपसंहारादिना तत्रैव तात्पर्यावगमात्। प्रत्यक्षादिभेदग्राहकप्रमाणस्य स्वप्नभेदग्राहकप्रमाणवत् सांव्यवहारिकत्वेनोपपत्तेः। सावकाशनिरवकाशन्यायावतारात्। प्रत्यक्षादिकं तु व्यवहारमात्रायोपयुज्यते, नात्यन्तिकं भेदं गृह्णाति। श्रुतिस्तु तात्पर्यवशाद् भेदाभावं गृह्णाति। एवं जीवानां परस्परभेदनिरासायेदमुच्यते। प्रतिवादिशरीरादन्यानि सर्वाणि प्रतिवादिन एव भोगसाधनानि, इन्द्रियत्वाद्, भोगसाधनत्वाद्वा प्रतिवादीन्द्रियवत्। एवं चक्षुरादिकमपि पक्षयित्वा प्रयोगः कर्तव्यः। एकेनैवात्मनोपपत्तौ बह्वात्मकल्पने गौरवमेव। आकाशादाविव विपक्षे बाधकस्तर्क उन्नेयः। सर्वेषामेकत्वे सर्वत्र सुखदुःखादिकं सर्वेऽनुसन्दध्युरिति चेत् तर्हि पादावच्छिन्न आत्मा शिरोवच्छिन्नात्मवेदनामप्यनुसन्दध्यात्। तत्र शरीरस्यैकत्वेऽवच्छिन्ना भिन्ना यदि अत्रापि चेतनस्यैकत्वेऽप्युपाहिता भिन्ना इति तुल्यम्। तत्रैकस्यानेकवेदनानुसन्धानं भवेदिति चेद् अस्त्येवेश्वरस्यानुसन्धानमत्रापि तद्वत्। प्रवृत्तिस्त्वस्य न भवति, अभोक्तृत्वात्। भोक्ता हि प्रवर्तते सुखे, दुःखाच्च निवर्तते। नत्वभोक्ता। ततः पादतलकण्टकोद्धारणाय पाणितलव्यापारवच्चैत्रदुःखोद्धाराय मैत्रव्यापारप्रसङ्गो नास्ति। किञ्च आत्मानात्मसर्वभेदो मिथ्या, भेदत्वात् स्वप्नभेदवत्, विभक्तत्वाज्जडत्वाद् रज्जुसर्पवत्। नच

प्रत्यक्षादिबाधः । प्रत्यक्षं तु तात्त्विकभेदग्रहासमर्थमित्युक्तत्वात् । नच भेदः सत्यः वस्तुत्वाज्ज्ञेयत्वादात्मवदिति बाधकं वाच्यम् । तत्र वस्तुत्वं किं विवक्षितम् । तात्त्विकत्वं वा, तथाप्रतीयमानत्वं वा । आद्ये साध्याविशिष्टो हेतुः । द्वितीये शुक्तिरजतादौ व्यभिचारः । ज्ञेयत्वमपि तत्रानेकान्तमेव । प्रमेयत्वं च श्रुतिविरुद्धम् । 'नेह नानास्ती'ति बाधात् । तत्रेहेति ब्रह्मपरामर्शात् तत्रैव नानात्वनिषेधः । अन्यत्र भेदो भविष्यतीति चेन्न । कारणादन्यत्र कार्यासम्भवात् । तत्र निषेधेऽन्यत्र सम्भावनाभावात् । ब्रह्म जगत्कारणमिति प्रतिपादयिष्यामः । अद्वैते प्रयोगान्तरमपि — आत्मानात्मसमुदायस्तात्त्विकस्वान्तर्गतभेदहीनः, ज्ञेयत्वाद्, गगनवत् । समुदायस्य सन्दिग्धसाध्यतया पक्षत्वेऽपि तदेकदेशस्य प्रकारान्तरेण निश्चितसाध्यवत्तयोभयसिद्धत्वाद् दृष्टान्तत्वं प्रयुज्यते । यथा — सर्वे ब्राह्मणा वसिष्ठवदिति । पृथिवी इतरेभ्यो भिद्यते, पृथिवीत्वाद्, घटवदिति वर्तमानादिप्रयोगदर्शनाच्च । किञ्च भेदस्वभावो धर्मो वा द्वितीयेऽपीतरेतराभावः पृथक्त्वं वा । आद्ये प्रतियोगिनिरपेक्षत्वापत्तिः । नाहि घटः पटादिभिन्न इति कश्चित् स्वभावं प्रत्येति । नच स्वभावग्रहणमात्रेण भेदः प्रतीयते । तथा सति दूराद् वनग्रहे तरुभेदग्रहप्रसङ्गात् । न द्वितीयः । भेदग्रहणमन्तरेणेतरेतराग्रहादात्माश्रयत्वप्रसङ्गात् । नापि तृतीयः । पृथक्त्वस्य गुणत्वेन गुणादौ तदभावात् । तत्र भेदाप्रतीतिप्रसङ्गात् । नहि घटात् पटो भिन्नः अयमनयोर्भेद इति विशेषणविशेष्यभावगर्भो भेदः प्रतीयते । विशेषणविशेष्यभावश्च सम्बन्धपूर्वकः । स च भेदज्ञानपूर्वकः इति चक्रकानवस्थाप्रसङ्गः । तस्माद् भेदयितुमशक्यत्वादद्वैतं सिद्धम् । एतत् सर्वमभिप्रेत्य 'गलितनिखिलभेदमि'त्युक्तम् ॥

अथास्वप्रकाशरूप आत्मा, स्वाधारया वृत्त्या न गृह्यते । एकक्रियायामेकस्यैव कर्मत्वकर्तृत्वप्रसङ्गात् । नह्यसिधारेव स्वात्मानं छिनत्तीति दृष्टचरम् । नापि विषयज्ञानाधारतया प्राभाकरवदात्मा न गृह्यते संवित्कर्मतामन्तरेणापक्षत्वात् संवेदनवत् । ततः परिशेषादात्मनः स्वप्रकाशसिद्धिः । किञ्च, विज्ञानस्वरूपत्वमात्मनो वेदान्तेषु श्रूयते । 'विज्ञानमानन्दं ब्रह्म' 'अयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्' इति च । विज्ञानं च स्वप्रकाशः, तदभिन्नात्मा कथमस्वप्रकाशः स्यात् । विज्ञानमेव कथं स्वप्रकाश इति चेद् अनुमानात् । विवादास्पदं घटादिव्यवसायज्ञानं स्वप्रकाशं, ज्ञानत्वात्, मयेदं

विदितमित्यनन्तरं जायमानसंवेदनवत् । नच साध्यविकलो दृष्टान्तः । अनुव्यवसायग्राहकज्ञानान्तराभावाद्, भावे वानवस्थाप्रसङ्गात् । किञ्च, ज्ञानं स्वप्रकाशमेवैष्टव्यम् । तद्ग्राहकज्ञानासम्भवात् । तथाहि—ज्ञानं त्रिक्षणावस्थायि भवद्भिः स्वीक्रियते । ततश्च युगपदनेकज्ञानोत्पत्त्यभावात् । ग्राह्यज्ञानस्थितिकाले ग्राहकज्ञानमुत्पद्यत इति वाच्यम् । ग्राहकस्थितिकाले ग्राह्यं नश्येदिति कथं गृह्येत । प्रत्यक्षे विशेषस्य सत्तापेक्षणात् । स्वप्रकाशत्वमपि स्वव्यवहारे स्वातिरिक्तदर्शनानपेक्षत्वं, नतु स्वकर्मकत्वम् । तेन न स्वात्मनि वृत्तिविरोधः । अथच प्रदीपवच्च विज्ञाने वृत्त्युपपत्तिः । यथा प्रदीपः परत्र विषये विज्ञानादिलक्षणं कार्यं कुर्वन् स्वात्मन्यपि स्वभावविशेषादेव विज्ञानादिकार्यं करोति, नतु दीपान्तरमपेक्षते, तथा विज्ञानमपि विषये व्यवहारकार्यं कुर्वत् स्वभावभेदादेव स्वात्मन्यपि व्यवहारकार्यं कुर्यात्, विज्ञानान्तरं नापेक्षते इति किं न स्यात् । तदुक्तम्—

"एकं कस्यचिदन्यस्य द्वयमेव प्रकाशकम् ।
अत्यन्तमनपेक्षस्य नैकमप्यस्तु का क्षतिः ॥"

इति । तस्मात् प्रथमज्ञानस्य ज्ञानान्तरग्राह्यत्वेऽनवस्था । तर्कोपकृतानुपलब्ध्या वेदनान्तरासिद्धौ परिशेषात् स्वप्रकाशतासिद्धिः । नच वाच्यं वेदनान्तरवेद्यं, वस्तुत्वात् परवदिति सत्प्रतिपक्षतेति । यद्वस्तु तद् वेद्यमिति व्याप्तिज्ञान एव व्यभिचारात् । तत्र वेदनान्तराङ्गीकारे सर्वोपसंहारसम्भवाद् व्याप्तिग्रह एव न स्यात् । ननु विनाशिनो ज्ञानस्य कथं नित्यात्मत्वसिद्धिरिति चेन्न । विज्ञानस्य विनाशासिद्धेः । नीलाद्युपधानविनाशे तत्र नष्टत्वप्रतीतिः । यथा घटविनाशे तदुपहिताकाशविनाशप्रतीतिः । अभिन्ना च संवित् । ततोऽप्यात्मवन्नित्या । अभिन्नत्वे चानुमानं— संवित् स्वान्तर्गतभेदशून्या उपाधिमन्तरेणाविभाव्यमानभेदत्वाद्, आकाशवत् । ततः संविदात्मक आत्मा । तस्मात् स्वप्रकाशः । स्वप्रकाशत्वाच्च प्रपञ्चमिथ्यात्वसाधकदृश्यत्वादिहेतूनां तत्र नानेकान्तता । दृश्यत्वं स्वव्यवहारे स्वातिरिक्तसंविदन्तरापेक्षानियमः । जडत्वं चासंविद्रूपत्वम् । तदुभयमप्यात्मनि नास्तीति कथमनेकान्तो हेतुः स्यात् । ननु प्रपञ्चः पक्षः । स च प्रमितो वा न वा । नचेच्छशविषाणवत् पक्षत्वासम्भवः । प्रमितश्चेद् धर्मिग्राहकप्रमाणबाध इति

चेन्न। उभयथापि दोषाभावात्। यद्याद्यः पक्षः, तदा परप्रसिद्ध्यापरो बोधनीय इति वेदान्तानुसारेण परप्रमित्यैव पक्षत्वोपपत्तेः। यदि द्वितीयः, तदास्मत्पक्षानुसारेण प्रतीतमात्रस्य पक्षत्वोपपत्तेः। व्यर्थमेव शशविषाणवदिति वदता त्वयैव तस्य पक्षत्वाङ्गीकारात्। अन्यथा तस्य पक्षत्वाभावः कथं साधनीयः। तस्मादात्मनः स्वप्रकाशत्वात् तत्र दृश्यत्वादेर्व्यभिचारादखण्डं ब्रह्म वेदान्तेनापौरुषेयेण बोध्यत इति सिद्धम् ॥

ननु कथमखण्डार्थो वेदान्तेन बोध्यते। सर्वो हि शब्दः संसर्गं वा विशिष्टं वा बोधयति। अभिहितान्वयवादिमते संसर्गम्, अन्विताभिधानमते विशिष्टं बोधयति। यथा—गामानयेत्युक्ते गवानयनयोः संसर्गमानयनान्वितां गां गवान्वितमानयनं वावगच्छति लोकः। ततः कथं वेदान्तवाक्यं पदार्थबोधकं सत्यज्ञानादिवाक्यार्थबोधकं तत्त्वमस्यादिद्वितीयरहितमखण्डमात्रं बोधयेदिति चेन्मैवम्। अखण्डार्थतायाः प्रमाणसिद्धत्वात्। तथाहि—लोके चन्द्रप्रातिपदिकार्थबुभुत्सुं प्रति कश्चिद् वदति—प्रकृष्टप्रकाशश्चन्द्र इति लक्षणम्। स च प्रकृष्टसन्तमसव्यावृत्त्याल्पप्रकाशखद्योतादिव्यावृत्त्या च चन्द्रस्वरूपमात्रमखण्डं जानाति, न तु व्यावृत्तिव्यवहारौ, तयोरबुभुत्सितत्वादिति सिद्धे सत्यादिवाक्यमस्थूलादिवाक्येन साक्षाद्व्यावृत्तिपरेणैकवाक्यं सदितरव्यावृत्त्या ब्रह्मस्वरूपं बोधयति। लक्षणवाक्यत्वात्। तथाच सत्यपदेन ब्रह्मणो बाध्यत्वं व्यावर्त्यते। ज्ञानपदेन जडत्वम्। अनन्तपदेन कालतो देशतो वस्तुतश्च परिच्छिन्नत्वं वार्यते। आनन्दपदेन दुःखरूपत्वं निवार्यते। तत इतरधर्मव्यावर्तनद्वाराखण्डं वस्तु बोध्यते। लक्षणया सत्यादिपदैर्बाध्याभावादेर्लक्षितत्वात्। सा च जहल्लक्षणा गङ्गादिपदवत् ॥

महावाक्ये तु 'तत्त्वमसी'त्यादौ जहदजहल्लक्षणया सोऽयं देवदत्त इतिवदखण्डार्थबोधनम्। यथा सोऽयमित्यत्र पूर्वदेशकालावेतद्देशकालौ च विहाय तदिदंपदाभ्यां देवदत्तस्वरूपमात्रं लक्ष्यते, विशिष्टस्यैकत्वासम्भवात्, तथा महावाक्येऽपि तच्छब्दपरामृष्टं कारणत्वपरोक्षत्वादि विहाय त्वंपदेन संसारत्वसन्निहितत्वादि विहाय केवलं चैतन्यमात्रं लक्ष्यते। अतो भागत्यागलक्षणया तत्त्वंपदार्थयोरैक्यं स्वरूपं च वाक्यैरुभयविधैर्बोध्यते ॥

नन्वपौरुषेयत्वं वेदान्तानां कथं, येनापौरुषेयेणाखण्डार्थता बोध्येत । सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादपौरुषेयो वेद इति चेद् न । विशेषणासिद्धेः । प्रलये सम्प्रदायस्य विच्छेदाभ्युपगमात् । विशेष्यमप्यसिद्धम् । 'तस्माद् यज्ञात् सर्वहुतः ऋचस्सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत' 'ये वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोस्सामवेद आदित्यादि'त्यादिश्रुतिभिरेव कर्तुः प्रमीयमाणत्वात् । नचाप्रमीयमाणकर्तृकत्वं न विवक्षितं, । किन्तु स्मरणागोचरकर्तृत्वमिति वाच्यम् । मुक्तकश्लोकादौ व्यभिचारात् । तस्मात् पौरुषेयो वेदः, वाक्यत्वात्, कालिदासादिवाक्यवत् । शब्दानित्यत्वाच्च वेदस्य पौरुषेयत्वमिति प्राप्तम् । एवं प्राप्ते उच्यते — किमिदं पौरुषेयत्वं नाम । किं प्रमाणान्तरेणार्थं बुद्ध्वा रचितत्वम् । जन्मश्रवणान्यथानुपपत्त्यैवार्थं बुद्ध्वा रचितत्वं सिध्येदिति चेन्न । इदानीमस्मदादिभिरुच्चार्यमाणेषु वेदेषु पुरुषाधीनत्वेऽप्यर्थं बुद्ध्वा रचितत्वाभावात् । द्वितीयस्तु पक्षोऽङ्गीक्रियत एव । श्रुत्यादिप्रमाणासिद्धत्वात् । वर्णास्तावन्नित्याः सर्वगताश्च, अमूर्तद्रव्यत्वादाकाशवत् । तथा च कालतो देशतश्च क्रमरहिता वर्णाः आनित्योच्चारणप्रतिपत्तिक्रमवन्तश्च । ततश्च पूर्वपूर्वक्रमानुस्मृतिनिमित्तकोत्तरोत्तरतत्सदृशक्रमवतां वेदशब्दवाच्यानां साम्प्रतमपि पुरुषाधीनोत्पत्तिमत्त्वात्, सृष्टिसमयेऽपि श्रुत्या तथात्वस्य प्रतिपादयितुमुचितत्वात् पुरुषाधीनोत्पत्तिकत्वमस्त्येव । वेदानित्यत्वानुमानं च 'वाचा विरूप नित्यये'त्याद्यागमविरुद्धम् । अन्यथा 'सामवेद आदित्यादि'ति श्रुतिबलात् तेषामपि कर्तृत्वं स्यात् । तेषां सम्प्रदायप्रवर्तकत्वमात्रमिति यदि तदा ईश्वरस्यापि सर्गादौ तथात्वं न दण्डवारितमिति । तथा च श्रुतिः स्वातन्त्र्यं निषेधति — 'अस्य महतो भूतस्य निःश्वसितमेवैतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासपुराणानी'ति । ईश्वरस्य सर्वज्ञत्वात् स ईश्वरः कल्पान्तरप्रलयाद्यन्तर्हितमपि स्मृत्वा सर्गादौ करोति । अन्यथा स्वतन्त्रत्वे ब्रह्महत्याश्वमेधादीनां फलवैपरीत्यमपि वदेत् ॥

स्वतःप्रमाणत्वाच्चापौरुषेयो वेदः । ननु किमिदं स्वतःप्रमाणत्वम् । वेदस्य तावन्नित्यानिर्दोषत्वमेव स्वतस्त्वम् । स्वतन्त्रपुरुषप्रणीतत्वाभावेनाप्तोक्तत्वानपेक्षणात् । पदादिजन्यवृत्तिरूपज्ञानस्य प्रमाप्रमासाधारणविज्ञानसामग्रीजन्यत्वे सति तदतिरिक्ताजन्यत्वमस्वतःप्रमाणत्वम् । अप्रमायाश्च

सामान्यसामग्रीव्यतिरिक्तदोषादिजन्यत्वात् परतः प्रमाणत्वम् । मनस्सन्निकर्षादिः सामान्यसामग्री । गुणो दोषो वा तदतिरिक्तः । तज्जन्यत्वमुत्पत्तौ स्वतस्त्वमित्यर्थः । अतिरिक्तसामग्रीजन्यत्वकल्पनायां कल्पनागौरवमेव दोषः । ज्ञप्तौ स्वतस्त्वं नाम येन ज्ञानं गृह्यते तेनैव तदा तत्प्रामाण्यं गृह्यत इत्येतत् । ज्ञानं तु साक्षिवेद्यं वेदान्तिमते । भाट्टानां ज्ञाततान्यथानुपपत्तिग्राह्यं ज्ञानम् । स्वयंप्रकाशं ज्ञानं गुरुमते । त्रय एव स्वतःप्रामाण्यवादिनः । अन्येषां प्रामाण्यस्य परतस्त्वम् । तच्च ज्ञानग्राहकादन्येन ग्राह्यत्वम् । ज्ञानं मनसा गृह्यते । प्रामाण्यमनुमानेन समर्थप्रवृत्तिजनकत्वलक्षणेन । अप्रामाण्यं परत एव गृह्यते । अप्रमास्वरूपं साक्ष्यादिना गृह्यते । अप्रामाण्यं बाधकज्ञानेन । एतावन्तं कालमिदं शुक्तिशकलं रजतमित्यभादित्यादिना प्रामाण्यस्य स्वतस्त्वे ज्ञानग्रहानन्तरं प्रमाणमप्रमाणं वेदं ज्ञानमिति सन्देहो न स्यादिति चेत् । सत्यम् । बुद्धिमात्रं प्रमेत्येव गृह्यते । विषयापहारकारणदोषादिना सन्देहादिर्जायते । तथाहुः —

"तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानैरपोह्यते ॥"

इति । परतो ज्ञायत इति पक्षे प्रमाणभूतयानुमित्या पूर्वज्ञानप्रामाण्यं गृह्यते । अनुमितेः प्रामाण्यमन्ययानुमित्या, तस्या अप्यन्ययेत्यनवस्था स्यात् । न वाच्यमनवस्था स्वतःपक्षेऽपि समाना, तत्रापि ज्ञाततान्यथानुपपत्तिप्रसूतयार्थापत्त्या वा ज्ञानप्रामाण्ये सहैव गृह्येते । अनुमितिरप्यनुमित्यन्तरेण ग्राह्येति । वेदान्तिमते त्वस्यादोषत्वात् । तन्मते ज्ञानं वृत्तिरूपं साक्षिवेद्यं, साक्षी च स्वप्रकाशः इति नानवस्था । तस्मात् स्वतःप्रमाणभूता वेदान्ता सिद्धं ब्रह्म बोधयन्ति ॥

ननु कथं सिद्धे ब्रह्मणि वेदान्ताः प्रमाणम् । सर्वस्यापि वाक्यस्य प्रवृत्तिनिवृत्तिजनकतया प्रथमव्युत्पत्तिदर्शनात्, कार्यान्विते शब्दप्रामाण्यात् । सर्वोऽपि पुरुषो गामानय गां बधानेत्युक्ते प्रवर्तते । तद् दृष्ट्वा बालो व्युत्पद्यते, नतु गौस्तिष्ठतीत्युक्ते कश्चित् प्रवर्तते, व्युत्पत्तिरपि न भवति । अतो वेदान्ता आत्मा प्रतिपत्तव्य इत्येवं विधिपरत्वेन नेया इति चेन्नैवम् । कार्ये व्युत्पत्त्यसम्भवात् । कार्यातिरिक्तानि पदानि न कार्यान्वितस्वार्थे

नियतसामर्थ्यानि, पदत्वात्, कार्यपदवत् । नच साध्यविकलं निदर्शनम् । एकत्र वाक्ये कृत्युद्देश्यतालक्षणकार्यद्वयाभावात् । अतः कार्यपदस्य कार्यान्तरान्वितस्वार्थगोचरत्वाभावाद् भावार्थरूपकार्यान्वितत्वस्य तैरनङ्गीकरणात् । विपक्षे तु योग्येतरान्वितस्वार्थमात्रस्य सर्वपदसामर्थ्यप्रयोगजनकत्वे सम्भवति कार्येतरपदानां कार्यान्वितस्वार्थगोचरत्वं, कार्यपदस्य च स्वरूपे सामर्थ्यमन्यान्विते वा सामर्थ्यमिति प्रयोजकद्वयाङ्गीकारे गौरवं बाधकमुन्नेयम् । तथा सिद्धार्थेऽपि व्युत्पत्तिर्दृश्यते । यथा — चैत्रस्य सुतोत्पत्तिं दृष्ट्वा वार्ताहरेण सह चैत्रसमीपं गतस्य भाषानभिज्ञस्य कस्यचित् तटस्थस्य पुत्रस्ते जात इति वार्ताहरवाक्यं श्रुत्वा विकसितमुखं चैत्रं पश्यतः पुत्रजन्मैवास्य हर्षहेतुरिति विचारवतोऽस्य वाक्यस्य पुत्रजन्मैवार्थ इति समुदायव्युत्पत्तिर्भवति । तत आवापोद्धाराभ्यां विशेषसङ्केतग्रहो भवति । तथा वेदान्तेऽप्युपक्रमोपसंहारादिना ब्रह्मवत्त्वं सम्भवति । न च प्रतिपत्तिविधिपरत्वम् । प्रतिपत्तेः प्रमाणप्रमेयाधीनतया कर्तुमकर्तुमन्यथा वा कर्तुमशक्यत्वादविधेयत्वम् । ततः कार्यान्वितपरत्वं वेदान्तानां न सम्भवति । सिद्धेऽप्यर्थे शब्दप्रामाण्याय प्रयोगः — सिद्धोऽप्यर्थो मुख्यया वृत्त्या शब्दबोध्यः, प्रमेयत्वात्, कार्यवत् । विपर्यये तु तत्र दृश्यमानोपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गभङ्गप्रसङ्गो बाधकः । मुख्यार्थे सम्भवति लक्षणाङ्गीकारोऽपि बाधकः । कार्यान्वितत्वानङ्गीकारेऽपि प्रयुज्यते — वेदः सिद्ध एवार्थे प्रमाणं, प्रमाणत्वात्, चक्षुर्वत् । नच विधिवाक्ये बाधः, बलवदनिष्टाननुबन्धीष्टसाधनत्वस्य विध्यर्थत्वात् तस्य च सिद्धत्वात् । नच भविष्यदनुमाने व्यभिचारः । तस्य साध्यत्वेऽपि पराभिमतकृत्युद्देश्यत्वरूपकार्यत्वाभावात् तदितरस्यैव सिद्धत्वस्येह विवक्षितत्वात् । तादृशसिद्धत्वस्य भविष्यत्यपि सत्त्वात् । विपर्यये त्वयं बाधः । पराभिमतकार्यस्यापूर्वत्वेन मानान्तरागोचरत्वात् तत्र सङ्गत्यनुपपत्तिः । अगृहीतसङ्गतिकानां च पदानां बोधकत्वानुपपत्तिरिति । ननु ममेदं कर्तव्यमिति प्रतिभासात् कार्यतासिद्धिर्मनसैवेति चेन्नैवम् । कर्तव्यताप्रतिभासस्य चिकीर्षारूपत्वात् तदतिरिक्तस्य सद्भावे प्रमाणाभावात् । तस्मात् सङ्गतिग्रहासम्भवात् कर्मभागोऽपि न पराभिमतकार्यबोधकः । किन्तु इष्टसाधनताबोधकः । किं पुनर्ब्रह्मभागः सिद्धबोधक इति सिद्धं वेदान्ता जगत्कारणब्रह्मबोधका इति ॥

ननु जगत्कारणं ब्रह्म कथम् । प्रधानपरमाण्वादीनामेवोपादानकारणत्वात् । अदृष्टादीनां निमित्तकारणत्वात् । चेतनोपादानत्वे कार्यस्यापि चेतनत्वप्रसङ्गात् । अचेतनं च दृश्यते भूतभौतिकादि । तस्मादचेतनोपादानमिति चेन्मैवम् । ब्रह्मण एव श्रुत्या कारणद्वयत्वबोधनात् । 'अधीहि भगवो ब्रह्मे'त्युपक्रम्य 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ती'ति सामान्यतो लक्षणमुक्तम् । तन्निर्णयाय ब्रूते श्रुतिः— 'आनन्दो ब्रह्मे'ति व्यजानात् 'आनन्दाद्ध्येवे'त्यादि । तत्र जननजीवनयोर्लयस्य चोपभोगादन्यत्रासम्भवाद् ब्रह्मैवोपादानम् । कर्तृत्वेन निमित्तमपि ब्रह्मैव । अदृष्टस्य निमित्तत्वेऽप्यचेतनस्य चेतनाधिष्ठेयत्वनियमात् तत्प्रेरकं ब्रह्मैव । अस्मदादेस्त्वदृष्टादिसाक्षात्कारासम्भवान्न प्रेरकत्वम् । नच चेतनोपादानत्वे कार्यस्य चेतनत्वापत्तिः । विवर्तवादाङ्गीकारात् । यथा रज्जुरज्ञानवशात् सर्पदण्डधारादिरूपेण विवर्तते, एवमविद्यावशादेव ब्रह्म जगदाकारेण जीवेश्वराकारेण च विवर्तते । विवर्तो नामातात्त्विकोऽन्यथाभावः शुक्तिरजतादिवत् । तात्त्विकोऽन्यथाभावः परिणामः क्षीरदध्यादिवत् । स च परिणामो ब्रह्मणि न सम्भवति । सर्वथा परिणामे ब्रह्मस्वरूपस्याभावप्रसङ्गः । एकदेशपरिणामस्तु न सम्भवति । निरवयवत्वेन देशाभावात् । आविद्यकस्तु देशो विवर्त एव सम्भवति । तदुक्तम्—

आच्छाद्य विक्षिपति विष्फुरदात्मरूपं
जीवेश्वर(स्व)जगदाकृतिभिर्मृषैव ।
अज्ञानमावरणविभ्रमशक्तियोगा-
दात्मत्वमात्रविषयाश्रयताबलेन ॥

इति । प्रधानादिवादस्य शास्त्रे निरासात् । ब्रह्मवादस्य स्थापितत्वाद् ब्रह्मैव त्रिविधं कारणम् । एतत्सर्वमभिप्रेत्य 'निखिलजगदधीशमि'त्युक्तम् ॥

तथा भ्रान्त्यधिष्ठानभूतः परमात्मा । तथाहि शुक्त्याद्यवच्छिन्नं चैतन्यं भ्रमाधिष्ठानम् । चैतन्यस्थाविद्या रजताद्याकारेण परिणमते । तत्रेदमिति धर्मिज्ञानमन्तःकरणपरिणामावच्छिन्नं चैतन्यम् । तच्चैतन्यगताविद्यावृत्तिरारोपितरजतप्रतिभासः । नचैवं सति एवं सिद्धान्तः । इन्द्रियसन्निकर्षस्थले विषयस्य फलव्याप्यत्वं परोक्षे च वृत्तिव्याप्यत्वम् । शब्दादिजनिता मनोवृत्तिरेव विषयाकारा भवति । वृत्तौ प्रतिबिम्बचैतन्यमात्मादि

प्रमाणम् । फलव्याप्यत्वस्थले घटादिविषयावच्छिन्नमात्मचैतन्यमेव विषयः । घटादिविषयान्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणम् । अहंवृत्त्यवच्छिन्नं चैतन्यं प्रमाता । तत्र प्रमाणेन प्रमेयावच्छिन्नचैतन्यगताविद्यायां व्यावर्त्तितायां साक्षिचैतन्यप्रकाश एव प्रमाणफलम् । तत्राध्यस्तो घटादिः प्रकाशते तादात्म्यसम्बन्धादिति राद्धान्तः । तथा च सति भ्रान्तिस्थलेऽपि शुक्तीदमंशावच्छिन्नं साक्षिचैतन्यमधिष्ठानं प्रकाशः । तदेव स्वमायाविवर्तभूतं रजताद्यपि भासयति । ततश्च फलस्यैकत्वादेकमेव ज्ञानम् । मनोवृत्तिद्वयाङ्गीकारे हि ग्रहणस्मरणवद् ज्ञानद्वयप्रसङ्गः । तच्चास्माकं नास्तीति नाख्यातिप्रसङ्गः ॥

ननु भ्रान्तिसिद्धौ तदधिष्ठानविचारः, सैव नास्तीति प्राभाकरः । तथा हि — विवादाध्यासिताः प्रत्यया यथार्थाः, प्रत्ययत्वात् , सम्मतवदिति सर्वप्रत्ययानां याथार्थ्यमिति चेन्मैवम् । विवादाध्यासितशब्देन विभ्रमस्वीकारे तत्रापसिद्धान्तः । तदस्वीकारे आश्रयासिद्धिः । भ्रान्तिसद्भावे किं प्रमाणमिति चेदनुमानं प्रत्यक्षमपि । अनुमानं तावत्—विवादपदं शुक्तिकाशकलं रजतज्ञानविषय, रजतोपायान्यत्वे सति रजतार्थिनां प्रवृत्तिविषयत्वात्, सम्यग्रजतवत् । हेतूच्छित्तिरेव विपक्षे बाधकस्तर्कः । प्रत्यक्षं च — एतावन्तं कालमिदं शुक्तिकाशकलं मिथ्यैव रजतमित्यभादिति प्रत्यभिज्ञानम् । तस्मादारोपः सिद्धः । आरोप्यमाणं तु विचारणीयम् । किमसत्, किं वा सत् , उत सदसत् , उतोभयविलक्षणमनिर्वाच्यमिति । न तावदाद्यः । असतोऽपरोक्षतया प्रतिभासानुपपत्तेः । असति प्रवृत्त्यनुपपत्तेश्च । अन्यथा शशविषाणादावपि तदुभयप्रसङ्गात् । नापि सदारोप्यते । सतो नेदमिति बाधानुपपत्तेः । इह बाध्यत्वादन्यत्रास्तीति गम्यत इति चेद् , बाधानुभवादेवान्यत्र विषयीक्रियते उतार्थापत्त्या कल्प्यते । नाद्यः । नेदमिति बाधादत्रासत्त्वमात्रं प्रतीयते । नत्वन्यत्र सत्त्वमनुभूयते । नापि द्वितीयः । कल्पनान क्यात् । नह्यन्यत्र सत्त्वमस्यात्र प्रतीतिमुपपादयेत्, प्रदेशभेदात् भूनलिनसत्त्वमात्रान्नभोनलिनं प्रतिभासेत । किञ्च इह निषिद्धम न नियमः । अधिष्ठानतादात्म्येन व्यभिचारात् । शुक्तित निषिध्यते । तदन्यत्र क्वापि न दृश्यते । ननु नेदं रजतमि

त्म्यमेव निषिध्यते न तु रजतस्वरूपमिति रजतमन्यत्रास्तीति चेत् तर्हि शुक्ति-रजतयोरुभयोरपि विविक्तयोस्तत्र प्रतिभासापत्तेः। यथा वयो(र्म ? व)नस्पत्योर्दूरात् तादात्म्यभ्रमे निकटमुपसर्पतस्तादात्म्यनिषेधे विविक्तयोरुपलम्भः। अपि च नेदं रजतमिति सामानाधिकरण्येनैव यदि निषेधः स्यात् तदा तादात्म्यनिषेधोऽपि शक्येत। न चैवं नियमः। वैयधिकरण्येनापि निषेधदर्शनात्। मया न तत्र दृष्टं सलिलमस्ति मया न तत्रानुभूतं रजतमस्तीति। अन्यत्र रजतमस्तीति त्वं भणसि, स किं बौद्धः। बुद्धौ स्थितं सत्यं रजतं बहिरारोप्यत इति ब्रूषे, तदा गुञ्जापुञ्जादौ बुद्धिस्थवह्न्यारोपे देहदाहप्रसङ्गः। अन्तरपि तस्य वह्नेरतात्त्विकत्वान्न देहदाहप्रसङ्ग इति चेत् तर्ह्यायातमत्यन्तासदनिर्वचनीयं वेति। तर्हि वैशेषिकादिमतं भवत्वत्र बाधितं देशान्तरेऽस्तीति चेन्न। देशान्तरादौ स्थितस्येन्द्रियसन्निकर्षाभावेन द्रष्टुमशक्यत्वात्। अन्यथा सर्वं सर्वत्र दृश्यत इत्यतिप्रसङ्गः। दोषवशाद् दर्शने नातिप्रसङ्ग इत्यपि न। दोषोऽप्यसदनिर्वचनीयं प्रकाशयेत् तादात्म्यवत्। तादात्म्ये तु प्रकारान्तराभावादसदनिर्वचनीयमभ्युपगन्तव्यम्। तद्वदत्रापि भवतु। देशान्तरस्थस्यात्र भाने मानाभावात्। तर्हि सदसद्रूपमारोपितमिति जैनमतं भवत्विति चेन्न। विरोधात्। एकस्य वस्तुनो विरुद्धद्वैरूप्यासम्भवात्। सम्भवे वा न क्वापि विरोधः स्यात्। सप्तभङ्गीनयस्य निराकृतत्वाच्च। ततः परिशेषादारोपितमनिर्वचनीयमित्यभ्युपेयम्। अनिर्वचनीयत्वञ्च सद्विलक्षणत्वे सत्यसद्विलक्षणत्वे सति सदसद्विलक्षणत्वम्। तदपि न तात्त्विकं, येन विरोधः स्यात्। किन्तु अविद्याविलसितमेव॥

नन्वविद्या किन्निष्ठा किंविषया। न तावद् ब्रह्मनिष्ठा। तस्य स्वप्रकाशत्वेनाविद्याश्रयत्वासम्भवात्। नापि जीवनिष्ठा। इतरेतराश्रयत्वापत्तेः। अविद्यया जीवभावो जीवभावे तदाश्रयाविद्येति। विषयोऽपि न तावद् ब्रह्म। तस्य स्वप्रकाशस्वभावत्वेनाविद्याविषयत्वाभावात्। अन्यथा तेजसोऽपि तमोविषयत्वं स्यात्। नापि जीवो विषयः। तस्याविद्याकल्पिततया तद्विषयत्वायोगात्, कल्पितस्यासत्त्वात्। तस्मादविद्याया आश्रयविषययोरभावादसत्त्वमिति चेत्। सत्यम्। परमार्थतस्त्वेवमेव। तथाप्यविद्यायामेव स्थित्वा सर्वं सम्भवति। तत एव सुरेश्वराचार्यैः—

"ब्रह्माविद्यावदिष्टं चेन्ननु दोषो महानयम् ।
निरविद्ये च विद्याया आनर्थक्यं प्रसज्यते ॥"

इति शङ्कित्वा—

"नाविद्यास्येत्यविद्यायामवोसित्वा प्रकल्प्यते ।
ब्रह्मद्वारा त्वविद्येयं न कथञ्चन युज्यते ॥"

इति सिद्धान्तितम् । तथा च ब्रह्मैवाविद्याया विषय आश्रयश्चेति केचिदाचार्याः प्रतिपेदिरे । कल्पितस्याश्रयविषययोरयोगात् अहमज्ञ इत्यादिस्वानुभवसिद्धत्वादविद्यायाः साक्षिवेद्यत्वम् । न च स्वप्रकाशे तदसम्भवः । तत्रैव कथञ्चित् सम्भवात् । जडे तु स्वकार्येऽविद्याया असम्भवात् । तर्ह्यविद्या न निवर्तेतेति चेत् । साक्षिसिद्धायाः प्रमाणज्ञानेन निवर्त्यत्वात् । प्रमाणेन त्वविद्या क्वापि न सिध्यति । दीपेनान्धकारवत् । तमसस्तेजोविषयत्वं मानाभावान्न सम्भवति । यद्वा जीवाश्रया ब्रह्मविषयाविद्या । नचेतरेतराश्रयः, बीजाङ्कुरवदनादित्वात् । तस्मादविद्यायाः आश्रयविषययोः सद्भावात् सदादिवैलक्षण्यमप्यतात्त्विकमित्यनिर्वचनीयमारोपितमिति सिद्धम् । शुक्तिरूप्यादिवत् प्रपञ्चोऽपि वियदादिः सद्रूपे ब्रह्मण्यारोपितः । विवादाध्यासिताः प्रपञ्चभेदाः सद्रूपे परिकल्पिताः, प्रत्येकं तदनुविद्धत्वात् । ये येन प्रत्येकमनुविद्धाः ते तत्र परिकल्पिताः । यथा प्रत्येकं चन्द्ररूपानुविद्धास्तत्र परिकल्पिता जलतरङ्गचन्द्रमसः तथा चामी प्रपञ्चभेदाः प्रत्येकं घटः सन् पटः सन्नित्यादिरूपेण सदनुविद्धाः । तस्मात् तत्र परिकल्पिता इति । तदनुविद्धत्वं तदाकारेण प्रतीयमानत्वम् । दूरात् तरवो निरन्तरा वनाकारा दृश्यन्ते । तत्र वनानुविद्धत्वेऽपि तत्र परिकल्पितत्वं नास्तीति प्रत्येकमित्युदितम् । तरवस्तु न प्रत्येकं वनानुविद्धाः किन्तु समुदिताः । समुदितेष्वेव वनाकारानुभवात् । विपर्यये तु निरधिष्ठानो विभ्रमो निरवधिकश्च बाधप्रसङ्गो बाधकः । नच शून्यमेवाधिष्ठानमवधिश्च स्यात् । तदनुविद्धमारोपितत्वं भासते । तदधिष्ठानमवधिश्च निषेधस्य यथा शुक्तीदमंशौ रूप्यस्य । न च कदाचन शून्यानुविद्धं भासते रजतादि, किन्तु इदमवच्छिन्नम् । नहीदमिति शून्यम् अपि तु शुक्तिकादि । अन्यथा भ्रान्तस्य तदुपादानानुपपत्तेः । तस्माद् भ्रान्त्यधिष्ठानभूतं परमात्मा । एतत्सर्वमभिप्रेत्य भ्रान्त्यधिष्ठानभूतमित्युदितम् ॥

तथा परमसुखनिदानं परमानन्दरूपम् । 'आनन्दो ब्रह्मेति व्यजानात्', 'आनन्दं ब्रह्मणो रूपम्', 'एषोऽस्य परमानन्दः' इत्यादिश्रुतेः। षष्ठ्यत्र पुरुषस्य चैतन्यमितिवदभेदेऽपि द्रष्टव्या । सामानाधिकरण्यश्रुतिबलात् । ननु सुखस्य दुःखाभावरूपत्वात् कथं ब्रह्मणा सामानाधिकरण्यमिति चेत्, सुखाभावो दुःखमिति विपर्ययेऽस्यापि सुखत्वात् । विधिमुखप्रत्ययवेद्यत्वं तूभयत्र तुल्यम् । प्रतियोग्यनिरूप्यत्वं वोभयत्र समानम् । तथाप्यनित्येन सुखेन कथं ब्रह्मणस्तादात्म्यमिति चेन्मैवम् । सुखस्य स्वरूपत्वेन नित्यत्वात् । तथाहि — 'विज्ञानमानन्दं ब्रह्म' इति श्रुत्या ब्रह्मसुखयोरेकत्वबोधनात् । वेदे आनन्दशब्दस्य सुखार्थत्वं त्याज्यं बाधकबलादिति चेत्, तस्यानिरूपणात् । ब्रह्मात्मस्वरूपो मोक्ष इति तव मतम् । तथा च ब्रह्मानन्दरागान्मोक्षे प्रवर्तमानस्य संसारप्रसङ्गो बाधः । आनन्दपदस्य सुखार्थत्व इति चेत्, (कु ? कु)त एतद्रागनिबन्धना प्रवृत्तिः । संसारबीजमिति शास्त्रस्थितिरिति चेन्मैवम् । संसारशब्देनानर्थ उच्यते । ततश्च रागनिबन्धना प्रवृत्तिरनर्थहेतुरित्यर्थः स्यात् । नचैवं, निषिद्धगोचरत्वस्य तत्रोपाधित्वात् । किन्तु यद्रागनिबन्धना या पुष्कलप्रवृत्तिः सा तत्प्राप्तये हेतुर्भवति । तथा च ब्रह्मानन्दरागात् प्रवृत्तिरपि तत्प्राप्तये हेतुर्भवति न संसाराय । प्रत्युत संसारविरोधित्वमेव । मुमुक्षुरागस्य परमानन्दगोचरत्वात् । परमो हि ब्रह्मानन्दः, 'एषोऽस्य परमानन्दः' 'एतस्यैवान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः । तथा च तद्गोचरो रागः कथमल्पीयस्यनेकदुःखसंयुक्ते सांसारिके सुखे प्रवर्तयेत् । तस्माद् बाधकाभावाल्लोकसिद्ध एव वेदेऽप्यानन्दपदार्थ इति सिद्धम् । तथा च दुःखाभावपरतया ब्रह्मण्यानन्दशब्दो न योजनीयः । सुखस्यानित्यत्वे प्रमाणमपि नास्तिकात्मत्वमेव (मानम् ?) इति चेत्, तदेव तु तद्विभुविशेषगुणत्वादिति चेन्न । हेतोरसिद्धत्वात् । सुखं मे जातमित्यनुभवः कथमिति चेत मनोवृत्तिप्रतिबिम्बितस्वरूपसुखादिव्यक्तेरेवंरूपत्वात् । घटाकाशो जात इतिवत् सन्तोष्टव्यम् । तत्र घटे जाते तदवच्छिन्न आकाशो जात इत्युपचारः । अत्र तु वृत्तेर्जनने तत्प्रतिबिम्बस्यापि जातत्वोपचारः । किञ्च परमात्मैव तत्र तत्र ब्रह्मशब्देनोच्यते । ततश्च परमात्मा आनन्दस्वभावः आत्मत्वाज्जीवात्मवत् । तत्त्वमस्याद्यसकृदैकात्म्यश्रुतेः परमात्मत्वम् । तथा च तदभिन्नः परमात्मा तद्विपरीतो भवितुं

नोत्सहते । नच साध्यविकलो दृष्टान्तः । परमात्मा परमानन्दस्वभावः परप्रेमास्पदत्वाद् व्यतिरेके घटादिवत् । नचायमसिद्धो हेतुः । परो हि निरतिशय आत्मनि प्रेमा सर्वस्य दृश्यते । कथमन्यथापरः सर्वोऽपि तादर्थ्येन प्रियः स्यात् । लौकिकमपि सुखं स्वार्थतया रोचयन्ते जनाः, नतु स्वरूपतः । स्वपरानन्दयोरविशेषप्रसङ्गात् । यदा सुखस्यात्मार्थत्वं, तदा किमु वक्तव्यमन्यत्र । तथा श्रुतिः — 'आत्मनस्तु कामाय सर्वं प्रियं भवती'ति । तथा च प्रेमास्पदत्वं भवेत् । परप्रेमास्पदत्वं तु कुत इति चेदेवम् । यच्च यदर्थं प्रियं तत् ततोऽप्यतिशयेन प्रियमिति लोके दृष्टम् । यथा पुत्रार्थतया प्रियात् तन्मित्रादेः पुत्र इति । हेतुरस्तु साध्यं मा भूदिति चेन्न [illegible]तेरेव बाधकत्वात् । नहि परप्रेमास्पदत्वं दुःखतत्साधनरूपस्य द्वेष्यस्य युज्यते । उपेक्षणीयस्यापि न घटते । तर्हि दुःखाभावरूपस्य प्रेमास्पदत्वं भविष्यतीति चेत् । सत्यम् । तथाप्यात्मनो दुःखाभावरूपत्वासम्भवात्, तस्य भावत्वात् । तर्हि सुखसाधनमात्मा भवतु तत्र प्रेमास्पदत्वञ्च भविष्यतीति चेन्न । तस्य सातिशयत्वात् । आत्मनि तु निरतिशयं प्रेम दृश्यते । तथा सुखसाधने सुखान्न्यूनः प्रेमा दृश्यते । आत्मनि तु सुखादप्यधिकः समीक्ष्यते । तथा च यत्र यत्र प्रेमातिशयस्तत्र तत्र सुखातिशयोऽपि दृश्यते लोके । श्रूयते च 'युवा स्यात् साधु युवाध्यायकः आशिष्ठो दृढिष्ठो बलिष्ठः तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्, स एको मानुष आनन्दः, ते ये शतं मानुषा आनन्दाः, स एको मनुष्यगन्धर्वाणामि'त्यारभ्य देवगन्धर्वदेवकर्मदेवपित्रिन्द्रबृहस्पतिप्रजापतिषु शतगुणोत्तरमुक्त्वा 'स एको ब्रह्मण आनन्द' इति निरतिशयमानन्दं दर्शयति श्रुतिः । ततश्च सकलसुखातिशायी निरतिशयः प्रेमात्मनि दृश्यते । तस्मान्निरतिशयानन्द एवात्मेत्युपेयम् । तदेव परात्मन आनन्दरूपत्वात् तदभिन्नः परमात्मापि तादृश इति परमसुखनिधानं परात्मा । तथा सत्यः परमात्मा अबाध्यः 'नेह नानास्ति किञ्चने'त्यत्रारोपितबाधावधित्वेन परिशेषात् । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतेः । सत्यमबाध्यं, बाध्यं मिथ्या । अनन्तमित्यनेन कालतो देशतो वस्तुतश्च परिच्छेदनिषेधादप्यबाध्यत्वम् । कालतः परिच्छेदे ह्यस्मिन् काले इदं नास्तीति बाधो भवति । देशपरिच्छेदेऽस्मिन् देशे इदं नेति बाधः । वस्तुपरिच्छेदे इदमिदं न भवतीति बाधो भवेत् । त्रिधा परिच्छेदनिषेधे अबाध्यत्वमेव ।

अद्वैतभावश्च द्वैतनिषेधादेव सिद्धः । 'एकमेवाद्वितीयं ब्रह्मे'ति श्रुतेः । 'द्वितीयाद्वै भयं भवती'ति च । नन्वद्वैतबोधिका श्रुतिः सत्या वा मिथ्या वा । आद्ये ब्रह्मणः सद्वितीयतापत्तिः । द्वितीये तु मिथ्याभूतशब्दप्रमाणेन जायमानमद्वैतज्ञानं कथं सत्यं भवेत् । अपरथा दुष्टेन्द्रियेण जायमानमपि रज्जुसर्पादिज्ञानं सत्यं स्यादिति चेन्मैवम् । स्वयमसत्यस्यापि प्रतिबिम्बस्य सत्यबिम्बबोधकत्वेन प्रामाण्यदर्शनात् । यत्र बिम्बमदृष्ट्वा प्रतिबिम्बमेव पश्यति तत्रानुमानं — विमतं बिम्बपूर्वकं प्रतिबिम्बत्वात् सम्मतवदिति । तथा स्वप्नकामिन्यादेरसत्यस्यापि सत्यशुभसूचकत्वदर्शनाच्च । यथाहुः स्वप्नाध्यायविदः —

"यथा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥"

इति । तथाच बादरायणसूत्रं — 'सूचकश्च श्रुतेराचक्षते हि तद्विदः' इति । ननु तत्र न प्रतिबिम्बस्य प्रमाणत्वं, किन्तु तज्ज्ञानस्य सत्यस्यैव प्रमाणत्वमिति चेन्मैवम् । अनवच्छिन्नस्य ज्ञानस्य न बिम्बानुमापकत्वम् । यस्य कस्यापि ज्ञानस्य तथात्वप्रसङ्गात् । प्रतिबिम्बावच्छिन्नस्य प्रमाणत्वे तस्यापि प्रामाण्यस्यावर्जनीयत्वात् । एतेनेदमपास्तं यद् यदा द्वैते प्रमाणमस्ति तदा सद्वितीयता, नास्ति चेत् नाद्वैतसिद्धिः । यदाहुः — एवंविधस्य परमात्मनो नमनमुपासनं भजनं वेदान्तविचारस्तत्कुरुतेति मुमुक्षून् प्रत्युपदेशः । तदुक्तमाचार्यैः —

"अहं ब्रह्मेति वाक्यार्थबोधो यावद् दृढीभवेत् ।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥
श्रुत्वाचार्यप्रसादेन यदा बोधो दृढीभवेत् ।
निरस्ताशेषसंसारनिदानपुरुषो भवेत् ॥"

इति । तस्मादात्मतत्त्वज्ञानान्मोक्ष इति सिद्धम् ॥

नन्वात्मतत्त्वज्ञानं परोक्षमपरोक्षं वा । नाद्यः । परोक्षज्ञानेनाविद्यानिवृत्तेरदर्शनात् । अनेकधा सूर्योदयेन प्राचीमनुमायापीयं दक्षिणेति मुह्यन्तो दृश्यन्ते । तत् कस्य हेतोः । अपरोक्षभ्रमस्यापरोक्षतत्त्वज्ञाननिवर्त्यत्वात् । नापि द्वितीयः । अपरोक्षज्ञानकरणाभावात् । न तावदिन्द्रियं करणं, तस्य ब्रह्मगो-

चरत्वासम्भवात् । नापि शब्दः । तस्य परोक्षज्ञानजनकतास्वभावात् । अपरोक्षे ब्रह्मणि परोक्षज्ञानजनने भ्रमः स्यादिति चेत् । अयं घट इत्यादिशब्दादपि घटप्रत्यक्षत्वापत्तेः । परोक्षमपि ज्ञानं करणस्वाभाव्यान्न भ्रमः । तस्मात् पक्षद्वयेऽपि दोष इति प्राप्तम् । एवं प्राप्त उच्यते — 'दशमस्त्वमसी'त्यादिवाक्ये प्रत्यक्षतामतिर्यथा तथा 'तत्त्वमस्या'दिवाक्याद् ब्रह्मापरोक्षधीः । यथा 'दशमस्त्वमसी'त्यादिवाक्यात् पूर्वं बहुशः प्रवृत्तमपीन्द्रियं दशमत्वज्ञानं न जनयति, वाक्यादेव दशमोऽस्मीति बुध्यते, तथा 'तत्त्वमसी'त्यादिवाक्यमपि ब्रह्मापरोक्षज्ञानं जनयति । ननु तत्र केवलं वाक्यमेव न भवति । किन्तु शरीरगोचरमिन्द्रियाद्यपि सहकार्यस्तीति चेदत्रापि मनः सहकार्यस्तीति तुल्यम् । शब्दस्यापरोक्षज्ञानजनकत्वे प्रत्यक्षान्तर्भावः स्यादिति चेन्न । चक्षुराद्यन्यतमत्वस्यैव प्रत्यक्षताप्रयोजकत्वात् । अन्यथा त्वयापि योगिमनसोर्बाह्यविषयापरोक्षप्रमितिकरताभ्युपगम्यते । तथापि न बाह्यप्रत्यक्षान्तर्भावस्तयोरभ्युपेयते । एवं शब्दस्यापरोक्षप्रमितिजनकत्वेऽपि प्रत्यक्षकरणता मा भूत् । धर्माधर्मबोधके वाक्ये कर्मकाण्डेऽपरोक्षज्ञानजनकत्वं न दृष्टमिति चेत् । 'दशमस्त्वमसी'त्यादौ दर्शितत्वात् । धर्मादेः परोक्षरूपत्वात् कर्मकाण्डस्य नापरोक्षताजननम् । इह तु ब्रह्मणः स्वतोऽपरोक्षत्वादपरोक्षज्ञानजननं युक्तम् । अत एवेन्द्रियसहितशब्दजन्यं ज्ञानं चैको ब्राह्मण इत्यादि सविकल्पमङ्गीकृतम् । ननु 'दशमोऽस्मी'त्यपरोक्षज्ञान इन्द्रियमेव करणम् । शब्दस्तु सहकारिमात्रमिति चेन्न । शब्द एव करणमिन्द्रियं सहकारिमात्रमिनि वैपरीत्यस्यापि सुवचत्वात् । अन्वयव्यतिरेकयोरुभयत्र तुल्यत्वात् । विनिगमनाहेतुस्तु क्वचिद् बहलतमे तमसि क्वचिच्च लोचनविरहिणोऽपि वाक्याद् दशमोऽस्मीति प्रत्यक्षप्रमितिदर्शनमेव ॥

ननु 'मनसैवेदमासव्यमि'ति श्रुतेर्मन एव करणं ब्रह्मापरोक्षज्ञाने । शब्दस्तु मनोवृत्तिजनकः । 'यन्मनसा न मनुते' 'अप्राप्य मनसा सहे'त्यादिप्रतिपक्षश्रुतेरपि सत्त्वात् कथमितिचेत् । तस्यानधिकृतमनोविषयत्वात् । अन्यथा — 'यद्वाचानभ्युदितं' 'यतो वाचो निवर्तन्ते' इत्यादिप्रतिपक्षश्रुतेः सद्भावाद्वाक्यस्यापि करणता कथं स्यात् । अनधिकृतपुरुषविषयत्वं तु समानमन्यत्रानभिनिवेशात् । तस्मान्मन एव करणमिति चेद् नैवम् । मनसः साक्षात्करणतासम्प्रतिपत्तेः । सुखादीनां साक्षिवेद्यत्वात् ।

आत्मनश्च स्वयंप्रकाशत्वात् नित्यशुद्धबुद्धमुक्तब्रह्मात्मैक्यसाक्षात्कारहेतुताया अत्यन्तासम्भवाद् । भावनासहितस्य मनसो गरुडादिसाक्षात्कारत्वदर्शनादन्यत्रापि तथेति चेन्न । तस्य विधुरपरिभावितकामिनीसाक्षात्कारवद्विभुत्वान्मनसः प्रमाणत्वासम्भवात् केवलप्रमाणसहकारित्वमात्रं मनसः । तर्हि 'मनसैवेदमाप्तव्यमि'ति श्रुतिः कथमिति चेत्, तत्र चित्तैकाग्र्यान्तरङ्गत्वप्रतिपादनादिति वदामः । करणत्वस्यासम्भवात् 'तद्धास्य विजज्ञे तमसः पारं दर्शयती'त्यादिनोपदेशानन्तरमेव तस्मादेवापरोक्षप्रमित्युत्पत्तिप्रतिपादनात् । नन्वेतानि वाक्यान्यागमाचार्योपदेशयोः साक्षात्कारहेतुत्वं न प्रतिपादयन्ति । किन्तु साक्षात्कारहेतोर्मनसः सहायताप्रतिपादनपरत्वेनाप्युपपत्तेः । अन्यथा श्रवणादेव साक्षात्कारे जाते मननादिविधानानर्थक्यप्रसङ्गात् । श्रुतवेदान्तानामपि पूर्ववत् संसारानुवृत्तिदर्शनाच्च न श्रवणमात्रात् साक्षात्कार इति चेत् । सत्यम् । आपादतस्तथा मनननिदिध्यासनाभ्यां क्रमेणासम्भावनाविपरीतभावनयोर्निरासेन तत्सहकृतश्रवणस्य विधानाच्छब्दादेव साक्षात्कारत्वोपपत्तेर्मनसस्तत्सहकारितैव युक्ता । पूर्ववत् संसारोपलब्धिः स्वप्रतिबद्धविज्ञानपुरुषविषया न सर्वश्रुतवेदान्तविषया ॥

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"
'भूयश्चान्ते बिश्वमायानिवृत्तिः ।'
'तरति शोकमात्मवित् योऽस्माकमविद्यायाः परं
पारं तारयसि ।'
"मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।"
"तरत्यविद्यां विततां मयि तस्मिन् हृदि स्थिते ॥"

इति श्रुतिस्मृतिषु ब्रह्मविद्याया एवाविद्यानिवर्तकत्वश्रवणात् ब्रह्मविद्याया वेदान्तवाक्यमेव करणं परिशेषात् । तथा वाक्यस्य करणत्वमपरोक्षजनकत्वञ्च श्रूयते । 'नावेदविन्मनुते तं बृहन्तं', 'तं त्वौपनिषदं पुरुषं पृच्छामि' ।

"वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः ।"

अत्र हि विज्ञानमिति विशेषणेन विशेषविषयत्वप्रतिपादनान्निश्चयहेतुत्वे सिद्धे सुशब्दविशेषणेनापरोक्षहेतुत्वप्रतिपादनाच्चायमर्थो निश्चीयते ।

यत् पुनरुक्तं — शब्दस्वाभाव्यात् परोक्षज्ञानजनकत्वमिति तद् दर्शितागमविरुद्धकालात्ययापदिष्टं दशमादिष्वनैकान्तञ्च । किञ्च नित्यशुद्ध आत्मन्यहं कर्ता भोक्तेत्यादिविभ्रमस्यापरोक्षत्वात् परोक्षज्ञानेन तस्याविलयात् प्रमाणान्तरेण ब्रह्मात्मैक्यापरोक्षतानुपपत्तेः शब्दस्यापरोक्षज्ञानाकरणत्वेऽविद्याया अनिवृत्तेरनिर्मोक्षतैव स्यादिति । तस्मादपरोक्षज्ञानादेव मोक्षः ॥

नन्वात्मज्ञानं न मोक्षफलकम् । अग्निहोत्रादिविधिशेषत्वात् । देहव्यतिरिक्तात्मतत्त्वज्ञानं विना विहितेषु निष्कम्पप्रवृत्त्यनुपपत्तेः, देहान्तरभोग्यत्वात् फलस्य । तथा च भोक्तारमधिगम्य कर्मसु प्रवृत्तिः । स च व्यतिरिक्तो देहादिभ्य इति वेदान्तैः 'अजरोऽमर' इत्यादिभिर्बोध्यते । आत्मज्ञाने फलश्रवणात् कथमन्यशेषत्वमिति चेत् । न । तस्यार्थवादत्वात् । यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती'ति । अङ्गे फलश्रुतिरर्थवाद इति न्यायात् । तथाचोक्तम् —

"आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम् ।
कर्मप्रवृत्तिहेतुत्वं चात्मज्ञानस्य लक्ष्यते ॥
विज्ञाते चास्य पारार्थ्ये यापि नाम फलश्रुतिः ।
सार्थवादो भवेदेव न स्वर्गादिफलान्तरम् ॥"

इति ।

तथात्मज्ञानिनामपि जनकादीनां कर्माणि प्रवृत्तिदर्शनाच्च ज्ञानं विधिशेषः इति । अत्रोच्यते — 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यादिवदात्मज्ञानस्य शेषत्वं नास्ति । बोधकश्रुत्याद्यभावात् । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'ति विद्ययेति श्रुतिरत्राप्यस्तीति चेन्न । तस्याः प्रकृतोद्गीथविद्याविषयत्वात् । यथा श्राद्धादीनां कर्मशेषत्वं तथा विद्याया अपि किं न स्यादिति चेत् । सत्यम् । तथाप्युपासनाज्ञानस्यैव तदङ्गतास्तु, उपासनाप्रकरणे पाठात् । नच जनकादीनां प्रवृत्तिसामर्थ्यं लिङ्गम् । 'किं प्रजया करिष्यामो येषां नोऽयमात्मा, किमर्था वयमध्येष्याम' इति वैपरीत्यस्यापि दर्शनात् । अशनायाद्यतीतात्मविज्ञानस्य सकलक्रियाकारकशून्याद्वैतविषयत्वेन कर्मप्रवृत्तिविरोधकत्वात् । यमनियमादिप्रवृत्तिवत् कर्मणि प्रवृत्तिरपि ज्ञानिनः किं न स्यादिति चेत् । न । अपरोक्षज्ञानिनस्तत्रापि प्रवृत्त्यभावात् । 'न तस्य कार्यं करणञ्च विद्यते',

"ज्ञा(ना)मृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्य किञ्चित् कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥"

इति स्मरणात्। तर्हि भिक्षादनादौ कथं प्रवर्तेत इति चेत् तत्रापि यदृच्छयैव प्रवृत्तिः, न विधितः। तस्मादात्मज्ञानं न विधिशेषः । किन्तु 'एतावदरे खल्वमृतत्वमि'ति स्वप्रकरणपठितमोक्षफलमेव ॥

ननु कर्मैव मोक्षसाधनं, 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इति स्मृतेः। 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः', 'यावज्जीवमग्निहोत्रं जुहुयादि'त्यादिना कर्मण एव करणीयत्वबोधनात् । 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इत्यादिदोषश्रवणाच्च काम्यनिषिद्धत्यागेन नित्यनैमित्तिककर्मणां करणेनैव मोक्ष एष्टव्य इति चेन्मैवम् । कर्मणां साक्षान्मोक्षसाधनत्वमभिधीयते, परम्परया वा। नाद्यः। मोक्षस्य चतुर्विधकर्मफलान्तर्भावासम्भवात् । मोक्षस्य नित्यत्वेन संयमनपिण्डवदुत्पाद्यत्वाभावात्। स्वत एवासत्वेनाप्यत्वासम्भवात्। 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुतेः। नापि विकार्यत्वमवहननवत्। ब्रह्मरूपस्य मोक्षत्वात् तस्य विकार्यत्वासम्भवात् । नापि संस्कारकर्मफलत्वम्। निर्गुणे मोक्षे गुणाधानस्यासम्भवात् । प्रोक्षणादिवद् दोषापाकरणस्याविद्यानिवृत्तिरूपत्वात्। तस्याश्च ज्ञानादन्येन कर्मसहस्रेणाप्यसम्भवात् । नहि रज्जौ सर्पत्वभ्रमः स्नानशौचादिकर्मणा निवर्तते, किन्तु रज्जुत्वज्ञानादेव नश्यति । तथात्मन्यपि तत्त्वज्ञानादेवाविद्यानिवृत्तिः, नतु कर्मणेति युक्तं,

'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।'
'नास्त्यकृतः कृतेन ॥'
"कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥"

इत्यादिना साधनत्वनिषेधात् । द्वितीयस्त्वभ्युपेयते । कर्मणा सत्त्वशुद्धिः ततो ज्ञानं ज्ञानान्मोक्ष इति परम्परया । कर्मणैव हि संसिद्धिमित्येतदप्यत्रैव घटते। संसिद्धिर्ज्ञानं तत्र कर्मणां साधनत्वमिति। 'कुर्वन्नेवे'त्यादित्वविरक्तविषयः। विरक्तस्य तु प्रव्रजनं श्रूयते 'यदहरेवे'त्यादि ॥

ननु केवलकर्मणामेतानि निषेधवचनानि निषेधकानि भवन्तु, विद्याकर्मसमुच्चयस्तु मोक्षसाधनं भविष्यति। तथाचैकैकनिन्दया समुच्चयसाधनत्वं श्रूयते —

"अन्धं तमः प्रविशन्ति ये अविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायां रताः ॥"
"विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥"

इति । अविद्यामूलत्वात् कर्मणोऽप्यविद्यात्वम् । तथाच कर्मणा मृत्युपदवेदनीयं संसारं तीर्त्वा क्षयं कृत्वा विद्यया ब्रह्मज्ञानेन अमृतमश्नुते मोक्षं प्राप्नोति । यद्यपि मोक्ष आत्मरूपतया नित्यप्राप्तः, तथाप्यविद्यामात्रतिरोहितः कण्ठगतचामीकरवत् । तत्राविद्यानिवृत्तेरधिकं कार्यमस्तीत्यविद्यानिवृत्तौ विद्याया एवोपयोगः इत्युभयोरप्युपयोगः श्रूयते । स्मृतिश्च —

"तपो विद्या च विप्रस्य निःश्रेयसकरं परम् ।
तपसा कल्मषं हन्ति विद्ययामृतमश्नुते ॥
तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म चोक्तं महामुने ! ।
यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम् ॥
एवं तपश्च विद्या च संयुक्तं भेषजं महत् ।"

इत्यादिका । तस्माद् विद्याकर्मणी सह मोक्षं साधयत इति चेदत्रोच्यते — समुच्चयबोधकश्रुतिस्मृतिवाक्यानां क्रमसमुच्चयपरत्वोपपत्तेः । नित्यनैमित्तिककर्मभिर्दुरितक्षय एव क्रियते । अत एव 'अविद्यया मृत्युं तीर्त्वे'त्युदितम् ।

केवलविद्यानिन्दा तर्हि कथमितिचेत्, निन्दाया अपरिपक्वज्ञानविषयत्वेन वा देवताज्ञानविषयत्वेन वोपपत्तेः । एवमितरश्रुतीनामपि क्रमेण समुच्चयो द्रष्टव्यः । अपिच 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेने'ति श्रूयते । तत्र यज्ञेनेति करणे तृतीया । करणस्य साध्यं विविदिषन्तीति वेदनं धात्वर्थरूपम् । सन्वाच्येच्छायास्तु न यज्ञादिसाध्यत्वम् । विषयसौन्दर्यलभ्यत्वादिच्छायाः इष्टसाधनताज्ञानसाध्यत्वाच्च । अश्वेन जिगमिषतीत्यादावश्वस्य धात्वर्थं प्रत्येव साधनत्वं नेच्छां प्रति । अतोऽश्वगमनं यथा (तथा) यज्ञादिनापि वेदनं धात्वर्थ एव साध्यः । वेदनं मोक्षभावनायां करणम् । 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मभवनरूपमोक्षस्य फलत्वश्रवणात् । वर्तमानापदेशेऽपि रात्रिसत्रन्यायेन विधिसम्भवाद् ब्रह्मवेदनेन मोक्षं भावयेत्, यज्ञादिना च वेदनं भावयेदित्यन्वयः स्यात् । ततश्च यज्ञशब्दवाच्यानां कर्मणां ज्ञानं प्रत्येव साधनत्वं, नतु मोक्षं प्रति । मोक्षं

प्रति ज्ञानमेव करणम् । 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति श्रुतेः । 'ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यत' इति च । 'विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण' इति च ।

ननु यज्ञेनेति सहार्थे तृतीयास्तु । अदृष्टद्वारा वेदनस्य मोक्षं प्रति सहायः । यथा दर्शपूर्णमासयोः प्रयाजादिः स्वर्गे साहाय्यं करोत्यदृष्टद्वारा तद्वदिति चेन्न । वेदनस्य शमादिभिरेवेतिकर्तव्यतापूरणादितिकर्तव्यान्तरानपेक्षणात् । ततश्च यज्ञादीनां व्रीहिपुरोडाशादिवत् स्वरूपोपकारित्वमेव न फलोपकार्यङ्गत्वमिति वेदनस्वरूपनिर्वर्तकत्वं कर्मणाम् । ननु श्रवणादय एव साक्षात् ज्ञानोत्पादकाः, नतु यज्ञादयः । ततस्तेषां कथं तत्र करणत्वमिति चेत् । सत्यम् । परम्परासाधनेष्वपि लोके वेदे च करणत्वाभ्युपगमात् । लोके तावज्ज्वालाव्यवधानेऽपि पाके काष्ठानां करणत्वम् । वेदे चापूर्वव्यवधानेनैव कर्मणां (करणत्व...स्य ?) करणत्वम् । तथात्रापि प्रतिबन्धकदुरितक्षयद्वारापि यागस्य करणत्वम् । व्यवधानेनैव कर्मणां करणत्वं न विहन्यते ज्ञाने । 'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इति पौर्वापर्याभिधानात् । 'यः सह वेदे'ति च वेदन एव सहभावश्रवणाच्च । अत्र श्रुता वेदाक्षरयोजना — विद्यां परिपक्वात्मज्ञानलक्षणाम् अविद्याञ्च कर्मलक्षणां यः सह वेद उपायोपेयभावेन वेद सोऽधिकृतः पुरुषः अविद्यया कर्मणा विद्योत्पत्तिप्रतिबन्धकं मृत्युपदवेदनीयं पापं तीर्त्वा विद्यया परिपक्वब्रह्मसाक्षात्कारलक्षणया अमृतं मोक्षमश्नुत इति । अयं भावः —अविद्यापरिपाकाद् यथास्वं विहितं कर्मानुष्ठेयम् । विद्या तु परिपक्वा कर्मनिरपेक्षैव मोक्षं साधयिष्यतीति । समुच्चयवादिनोऽपि किं काम्यकर्मणा समुच्चयः निषिद्धेन वा नित्यनैमित्तिकाभ्यां वा । नाद्यौ तयोस्त्यागान्मुमुक्षुणा । नच तृतीयः । नित्यनैमित्तिकयोः सातिशयत्वेन मोक्षस्यापि सातिशयत्वप्रसङ्गात् । तस्माद् ज्ञानादेव मोक्ष इति सिद्धम् ॥

अथ कोऽयं मोक्षो नाम । न तावद् विषयोपप्लुतचित्तसन्तानोपरम इति बौद्धमतं घटते । चित्तसन्तानस्यात्मरूपतया तन्नाशस्यापुरुषार्थत्वात् । आत्मनाशार्थं कश्चिद्यतमानो न दृश्यते । नापि निरुपप्लवचित्तसन्तानोत्पादो मोक्षः । बन्धमोक्षयोर्वैयधिकरण्यापत्तेः । यो बद्धस्तस्यैव मुक्तिरपेक्ष्यते ।

इह तु सोपप्लुतचित्तसन्तानस्य बन्धो निरुपप्लवचित्तसन्तानस्य मोक्ष इति व्यधिकरणता । नहि विषयोपप्लुतस्य नाशमन्तरेण निरुपप्लवसन्तानस्योत्पत्तिः सम्भवति । आत्मनाशस्यापुरुषार्थत्वादेव चार्वाकोऽपि निरस्तः ॥

सततोर्ध्वगमनमलौकिकाकाशे स्थितिर्वा मुक्तिरिति जैनाः । तेषां मते मुक्तेरनित्यत्वप्रसङ्गः । सावयवस्यात्मनो नाशापत्तेः । आकाशस्यैकत्वात् तद् द्वैविध्यमपि न सम्भवति । ततो न किञ्चिदेतत् । एकविंशतिप्रभेदभिन्नदुःखस्यात्यन्तिकी निवृत्तिर्मोक्ष इति वैशेषिकनैयायिकयोर्मतम् । तदपि न शोभनम् । तत्रातीतदुःखस्य स्वत एव निवृत्तत्वेनासाध्यत्वात् । वर्तमानस्यापि विरोधिगुणनिवर्त्यत्वेन मुमुक्षुयत्नान्तरानपेक्षणात् । नाप्यनागतस्य तस्य निवर्तयितुमशक्यत्वात् । तद्धेतुनाशात् तज्जातीयस्यानुत्पादो मोक्ष इति चेन्न । अनुत्पादस्य प्रागभावत्वेनासाध्यत्वात् । नाप्यत्यन्ताभावः । तस्यापि नित्यतयासाध्यत्वात् । तस्यात्मना सम्बन्धः साध्य इति चेन्न । तस्यानिरूपणात् । अत्यन्ताभावस्य प्रतियोग्यनिरूपणाच्च । अतीतदुःखस्य ध्वंसप्रतियोगित्वाद्वर्तमानस्यापि तथा । आगामिना गतस्य प्रागभावप्रतियोगित्वात् भवतु वा यः कश्चनाभावः, तस्यानुभवासम्भवात् । तस्यापि दुःखकोटिनिक्षिप्तत्वेन नष्टत्वात् । 'दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यत' इति न्यायात् । जीवन्मुक्तिदशायां तदनुभवोऽस्तीति चेत् परममुक्तौ तदभावेन दुःखाभावस्यापुरुषार्थत्वापातात् । जीवन्मुक्तिपुरस्सरमेव परममुक्तिरित्यनियमात् । तत्त्वज्ञानप्रतिबन्धे सति जीवन्मुक्तिः, अप्रतिबन्धे तु ज्ञाने तस्मिन्नेव जन्मनि मुक्तिः । भरतादीनां प्रतिबन्धाज्जन्मत्रयेण मुक्तिः । शुकवामदेवादीनां सद्योमुक्तिश्रवणात् । एकस्मिन्नेव जन्मनि कायव्यूहनिर्माणार्थं जीवन्मुक्तिर्योगदशाभ्युपगन्तव्या । अन्यथा —

'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।'

इति स्मृतेः कर्मक्षयाभावेन मुक्त्यभावप्रसङ्गात् । अतः कायव्यूहनिर्माणेन (न ?) भोगसिद्ध्यर्थं योगिनोऽङ्गीकर्तव्या इति चेन्मैवम् ।

"क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।"

"ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥"

इति श्रुतिस्मृतिशतेभ्यो ज्ञानेनैव कर्मक्षयश्रवणात् भोगेनैव क्षय इति नियमासिद्धेः। ततो न भोगार्थं जीवन्मुक्तिरभ्युपेया। अत एव वर्तमानाप्यचिरमनुभूयत इति निरस्तम्। योगिस्वीकारस्यानावश्यकत्वात्। इतरथा मोक्षस्यानुभवासम्भवात्। नाभुक्तमिति नियमस्य प्रायश्चित्तप्रनष्टकर्मसु व्यभिचारात्। अकृतप्रायश्चित्तेऽयं नियम इत्यपि न। तादृशानामपि ज्वरहेतुकर्मणां —

'क्षीरार्कैराम्रपत्रैस्तु ज्वरं सद्यो विनाशयेद्'।

इति श्रवणाद्व्यभिचारात्। किञ्च अकृतप्रायश्चित्तत्वमेव ज्ञानिकर्मणां नास्ति, सगुणोपासनाया एव ज्ञानिनः प्रायश्चित्तत्वात्। तत्र प्रमाणं किमिति चेत्, कल्पितो विधिरेव 'एवं हास्य सर्वे पाप्मानः प्रदूयन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' इत्यादिवाक्यशेषे श्रूयमाणस्य पापक्षयस्य रात्रिसत्रन्यायेन फलत्वकल्पनया दुरितक्षयकामो ब्रह्मोपासनं कुर्यादिति प्रायश्चित्तविधित्वोपपत्तेः॥

"उपपातकेषु सर्वेषु पातकेषु महत्सु च।
प्रविश्य रजनीपातं ब्रह्मध्यानं समाचरेत्॥"

इति स्मृतेश्च॥

रात्रिसत्रन्यायस्त्वेवं —

'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति'

इति वाक्यशेषे श्रूयते। रात्रिशब्देन सोमयागविशेषा उच्यन्ते। अत्र विध्यश्रवणादर्थवादमात्रमिति प्राप्य राद्धान्तितम्। 'वचनानि त्वपूर्वत्वात्'। अप्राप्तत्वान्नायमर्थवादः, किन्तु अपूर्वत्वाद्विधिवचनम्। प्रतितिष्ठन्तीति प्रतिष्ठाफलश्रवणात् तत्कामोऽधिकारीति लाभात् प्रतिष्ठाकामो रात्रिसत्रं कुर्यादिति विधिः कल्प्यत इति। तस्मात् 'नाभुक्तं क्षीयत' इति नियमस्य व्यभिचारात् कर्मभोगाय न जीवन्मुक्तिरभ्युपेया इति सिद्धम्। किञ्च,

"सत्येनापि शपेद्यस्तु देवाग्निपितृसन्निधौ।
तत्र वैवस्वतो राजा धर्मस्यार्धं निकृन्तति॥"

इति स्मरणात् सुकृतस्यापि भोगैकनाश्यत्वानुपपत्तेः। नाभुक्तमित्यत्रोत्सर्गत्वात् 'ज्ञानाग्निः सर्वकर्माणी'त्यादीनामपवादत्वादपवादविषयं परिहृत्योत्सर्गः

प्रवर्तेत इति स्थितेः अकृतप्रायश्चित्तानामेव कर्मणां भोगेन क्षयः । ज्ञानिनस्तु ज्ञानमेव प्रायश्चित्तम् । तत्कर्मक्षयाय भोगापेक्षा कायव्यूहेन । सकलकर्मणां युगपद् भोगोऽपि न सम्भवति । एकैकस्य कर्मफलस्य कल्पमन्वन्तरादिषु भोक्तव्यस्यैकस्मिन् काले भोगासम्भवात्, दुःखाभावस्य स्वतन्त्रत्वेन पुरुषार्थत्वाभावात्, सुखविशेषत्वेनैव पुरुषार्थत्वात् । नच वैपरीत्यप्रसङ्गः, भावस्याभावशेषतानुपपत्तेः । तस्मान्न दुःखनिवृत्तिर्मोक्षः ॥

दुःखप्रागभावो मोक्ष इति प्राभाकराः । तदपि न युक्तम् । प्रागभावस्यासाध्यत्वेनापुरुषार्थत्वात् । प्रागभावस्य प्रतियोगिजनकतानियमात् कदाचिन्मुक्तस्य दुःखापत्तेः ॥

नित्यसुखाभिव्यक्तिर्मुक्तिरिति भाट्टाः भासर्वज्ञश्च । तत्र स्वरूपसुखाङ्गीकारे औपनिषदमतापत्तिः । भिन्नस्य सुखस्य तज्ज्ञानस्य च नित्ययोः स्वीकारे अद्वितीयश्रुतिव्याकोपः ॥

सांख्यास्तु प्रकृतिपुरुषविवेको मुक्तिरिति वदन्ति । तदपि न । सार्वविवेकमात्रस्य सुखदुःखाभावान्यतरत्वाभावेनापुरुषार्थत्वात् ॥

विवेके सति पुरुषस्य स्वरूपेणावस्थानं पुरुषार्थ इति केचित् । तन्न । पुरुषस्याप्यस्वरूपत्वात् सुखरूपत्वे चापसिद्धान्तात् । अपिच सांख्यैर्बन्धस्य कर्तृभूतबुद्धिगतत्वाभ्युपगमात् मोक्षस्य पुरुषनिष्ठत्वे बन्धमोक्षयोर्वैयधिकरण्यापातात् । बुद्धिगतावेव बन्धमोक्षौ पुरुषे उपचर्येते इति चेन्न । तत्र सम्बन्धानिरूपणात् । स्वस्वामिभाव एव सम्बन्ध इति चेन्न । सर्वथोदासीनस्य स्वामिभावे दृष्टान्ताभावात् । नच बुद्धेः स्वत्वमपि सम्भवति । अनाधेयातिशये पुरुषेऽनुपकारकत्वात् । नच द्रष्टृदृश्ययोग्यतालक्षणस्सम्बन्धः, पुरुषस्य द्रष्टृत्वात् प्रकृतेर्दृश्यत्वादिति वाच्यम् । मुक्तावपि संसारप्रसङ्गात् । तदापि द्रष्टृदृश्ययोग्यताया अनपायात् । नच पुरुषाणामनेकत्वादेकं प्रति प्रकृतिगतयोग्यताया अपायः अन्यं प्रति त्वनपाय इति न मुक्तस्य संसारापत्तिरिति वाच्यम् । अनाधेयातिशयतया पुरुषकृतविशेषाभावे व्यवस्थानुपपत्तेः । तस्मादनाधेयातिशयानन्दस्वभावस्यात्मनोऽविद्यातिरोधानमेव बन्धः, विद्यानिमित्ततदस्तमयो मोक्ष इति सिद्धम् ॥

ननु कस्याविद्या । किं ब्रह्मणः उत जीवानाम् । नाद्यः । सर्वज्ञस्य तदनुपपत्तेः । नापि द्वितीयः । तेषां परस्माद् भेदोऽभेदो वा । आद्ये

द्वितीयताव्याघातात् । द्वितीये पूर्वदोषानतिवृत्तेः । अविद्याकल्पितभेदे त्वितरेतराश्रयत्वस्याधस्तादेव दर्शितत्वात् । अविद्याया विद्याभावरूपतयात्मतिरोधायकत्वासम्भवाच्च ।

भावरूपत्वात् तिरोधानं सम्भवतीति चेन्न । तथा सत्यनादिभावरूपस्यात्मवन्नित्यत्वापातात् । अथ ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया च विमुच्यत इति चेत् तदा तस्यैकत्वाद् विद्वदविद्वद्गुरुशिष्यबन्धमोक्षव्यवस्था न स्युः । यदि नोत्पन्ना विद्या कस्तदा गुरुः, आत्मान्तराभावात् । यद्युत्पन्ना विद्या कस्तदा शिष्यः, सर्वभेदप्रविलयात् । मायाविनिर्मितौ गुरुशिष्यौ स्त एवेति चेन्न । उत्पन्नविद्यस्य मायानुत्पत्तेः । किञ्च अनादौ संसारे कस्यचिन्मुक्तिरासीन्न वा । आद्ये इदानीं संसारो न दृश्येत, आत्मान्तराभावात् । द्वितीयेऽपि कथं भविष्यतीति प्रत्याशा । नच पूर्वं विद्याभावादमुक्तिः । शुकवामदेवादीनामजाता विद्यान्यस्य भविष्यतीति का प्रत्याशा । गुरुसम्प्रदायाभावाच्च । तस्मादैकात्म्यवादे बन्धमोक्षव्यवस्थानुपपत्तेः पारमार्थिक एवात्मभेद आश्रयणीयः ।

"एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च ॥"

इत्यागमविरोध इति चेन्न । तस्येश्वरपरत्वात् । 'एष त आत्मा अन्तर्याम्यमृत' इति चेश्वरपरम् । तस्यान्तर्यामित्वात् —

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥"

इति स्मृतेरपीश्वरपरत्वात् । तस्य कायव्यूहनिर्माणेन बहुभावस्याप्युपपत्तेः । 'तत्त्वमसी'त्याद्येककार्योपदेशस्योपासनापरत्वात् । 'द्वा सुपर्णे'त्यादिना च साक्षाद् भेदो बोध्यते । तथा सुखदुःखव्यवस्थातोऽप्यात्मनानात्वसिद्धिः । तस्मादविद्या कस्येति निरूपयितुमशक्यमिति प्राप्तम् । एवं प्राप्ते उच्यते । यद्युच्येत सर्वज्ञस्य ब्रह्मणो नाविद्येति तन्न वक्तव्यम् । स्वरूपसर्वज्ञस्य नाविद्या घटते, प्रमाणसर्वज्ञस्य वा । नाद्यः । यतः स्वरूपज्ञानेन सर्वज्ञं चेद् ब्रह्माभ्युपेयते तदासर्वज्ञस्य ब्रह्मणो नाविद्यामन्तरेणाशेषार्थसङ्गतिरिति चेत् । सर्वज्ञत्वोपपत्त्यर्थमेव साभ्युपगन्तव्या । ततः सर्वज्ञत्वेन न

विरोधः । नापि द्वितीयः । अविरोधात् । प्रमाणतस्सर्वज्ञत्वेऽपि प्रमातृत्वस्य प्रमाणप्रमेयसम्बन्धस्याविवारितरमणीयत्वादनाद्यविद्यासम्बन्धमन्तरेणासिद्धेः सर्वज्ञत्वमविद्यावत्तामाक्षिपति नतु प्रतिक्षिपतीति कुतो विरोधः । अविद्या च न विद्याभावः । किन्तु अनादिभावरूपमज्ञानम् । तत्सम्बन्धमन्तरेण कूटस्थस्य ब्रह्मणो जगदुपादानत्वायोगात् । सा चावरणविक्षेपशक्तिद्वयवती । आवरणशक्त्या परमानन्दस्वभावमाच्छाद्य नात्मास्ति न भातीति प्रत्ययमाधत्ते । विक्षेपशक्त्या तु जीवेश्वरत्वादिभेदं प्रमातृप्रमाणप्रमेयकर्तृकर्मक्रियाभोक्तृभोगभोग्यानि च करोति । अत एव शास्त्रे ब्रह्मविवर्तया ब्रह्मोपादानमित्युच्यते । अविद्यापरिणामित्वादविद्योपादानमित्यपि व्यवह्रियते । तत्र विद्यानिवर्त्यत्वेनाविद्याव्यवहारः, नतु विद्याभावत्वेन स्वरूपविद्याया नित्यत्वेनाभावासम्भवात् । वृत्तिरूपविद्याया अभावसम्भवेऽपि तस्य कादाचित्कत्वेनाभावत्वेन च जगदुपादानत्वासम्भवात् । श्रूयते च कारणत्वमविद्यायाः —

"मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् ।"

इति । ननु प्रकाशस्य ब्रह्मणोऽप्रकाशाविद्याश्रयत्वं कथम् । तमःप्रकाशयोरिवाधाराधेयभावासम्भवादिति चेन्मैवम् । जडप्रकाशस्याप्रकाशानाधारत्वेऽपि चित्प्रकाशस्य सर्वाधिष्ठानस्याप्रकाशाविद्याश्रयत्वसम्भवात् । तर्ह्यविरोधादानिवृत्तिः । सत्यम् । चित्प्रकाशेनानिवृत्तिरेव । तस्य तत्साधकत्वात् । किन्तु प्रमाणज्ञानेन निवृत्तिः । तस्य तया सह विरोधात् । वेदान्तमहावाक्यजनितब्रह्मैकाकारविज्ञानं तदवच्छिन्नश्चित्प्रकाशो वा प्रमाणम् । तेनाविद्यानिवृत्तिः । नच वाच्यं प्रमाणस्य निवर्तकान्तराभ्युपगमेऽनवस्था । निवर्तकाभावे ज्ञानस्यानिवृत्तिः । तथाच सति सद्वितीयतापातः इति । कारणनिवृत्त्यैव तस्य निवृत्तिसम्भवात् । अविद्यैव च कारणम् । तर्हि कार्येण प्रमाणेन कारणाविद्याया निवृत्त्यसम्भव इति चेन्न । संस्कारेण तज्जनकानुभवस्य स्मरणेन च संस्कारस्यान्त्यशब्देनोपान्त्यशब्दस्य च परीक्षकैर्नाशाभ्युपगमात् । लोके चारणिजनितेन च वह्निनारणेर्नाशदर्शनात् । कदलीफलेन कदलीकाण्डस्य नाशात् ॥

ननु भवत्वेवं ब्रह्माश्रयाविद्या विषयः क इति चेद् । ब्रह्मैव । जीवोऽपि ब्रह्मैव । ततश्च स्वाश्रयाविद्या स्वविषयैव । [illegible]

